# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२१ वर्षे ३-४ अङ्कौ

वै० संवत् २०२४

प्रकाशनतिथिः

श्रावणीपूर्णिमा वै० संवत् २०२४

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०

सहायकसम्पादकः

मुरलीधर पाण्डेयः




२१ वर्षे ३-४ अङ्कौ

# विषयानुक्रमणिका

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२१ वर्षः } फाल्गुनपूर्णिमा, संवत् २०२३ { ३-४ अङ्कौ

# वेदान्तोपदेशविधेर्वैज्ञानिकत्वम्

श्रीबलदेव उपाध्यायः, अनुसन्धानसञ्चालकः, वा० सं० वि० वि०, वाराणसी ।

शश्वत् स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीला-
रासाय ते नम इदं चक्रमेश्वराय ॥

वेदान्ततत्त्वस्योपदेशविधेः स्वरूपमवबुध्य तस्य वैज्ञानिकत्वं समर्थयितुमयमुद्यमः । तत्र वेदान्तोपदेशविधिमन्तरेण न किमपि नूतनं तथ्यमुद्भावनीयं भवति साम्प्रतम् । वेदान्ततत्त्वानां विमर्शसमकालमेवायमुपदेशविधिरपि तत्रैव तस्मिन्नेव काले स्वाभीष्टं स्वरूपमलभतेत्येव वक्तुं पार्यते । अत्यन्तप्राचीनकालात् प्रवर्तितोऽयं विधिर्बहुष्वद्वैतवेदान्तग्रन्थेषु स्वल्पाक्षरैर्वा भवतु विपुलाक्षरैर्वा भवतु नितान्तं स्पष्टमुद्दिश्यत इति जानन्त्येव वेदान्तविदो विपश्चितः । श्रीशङ्कराचार्यचरणैः स्वीये विवेकचूडामणिग्रन्थे उपदेशसाहस्र्यां चातीव शोभनैः शब्दैर्बालानां सुखबोधाय रमणीयया शैल्या उट्टङ्कितोऽयं विषयस्तत एवावधेयः ।

अद्वैतवेदान्तिनां नये मुख्यः प्रश्नस्त्वयमेव यन्निष्प्रपञ्चस्य ब्रह्मणः स्वरूपोपलब्धिः कथमुपदेष्टुं पार्यते ? शब्दैरद्योत्यं मनसाऽमतं बुद्ध्या चानिश्चेयं निष्प्रपञ्चं ब्रह्म कथं च स्वरूपावबोधेन तुंपरमार्थतो ज्ञा प्रभवन्ति साधकाः ? स्वरूपाव-

बोधाय प्रपञ्चात्मिका भाषैव समर्था। उद्देशनिर्देशलक्षणात्मकं समग्रं साधनजातं शब्दैरेवाववोद्धुं शक्यते तज्ज्ञैः। इत्थंभूते व्यतिकरे प्रपञ्चसाधनमुखेनैव निष्प्रपञ्चस्य स्वरूपोदयो नामेति वेदान्तिनां सिद्धान्तः। प्रपञ्चमाश्रित्यैव निष्प्रपञ्चवर्णनेति वचनं तदर्थो वा सर्वत्र जागर्ति वेदान्तग्रन्थेषु। व्यवहारमनाश्रित्य परमार्थस्य न समवबोधः सम्भवति। व्यवहारश्च शब्दप्रयोगमन्तरेण नैव सिध्यति, शब्दमूलकत्वाद् व्यवहारस्य। साधनचतुष्टयसम्पन्न एव शिष्यो वेदान्ते जिज्ञासुः। अधिकारिज्ञानमुखेनैवोपदेशस्य याथार्थ्यं समुपजृम्भते। अतिप्रख्यातं साधनचतुष्टयं शिष्यस्य योग्यतां नूनमभिव्यनक्ति। नित्यानित्यवस्तुविवेकवान्, ऐहिकामुष्मिकभोगविरागवान्, शम-दमोपरति-तितिक्षा-समाधान-श्रद्धासम्पत्तिसम्पन्नो जगतो नानाविधसन्तापपापेभ्यो मोक्षमिच्छन् शिष्यः शान्तं दान्तमहैतुकदयालुं ब्रह्मवेत्तारं गुरुं शरणं व्रजति ब्रह्मणः स्वरूपोपलब्धये। गुरुश्च तमनुशास्त्यध्यारोपापवादविधिना।

निष्प्रपञ्चे ब्रह्मणि प्रपञ्चात्मकस्य जगतः पदार्थानामारोप एव 'अध्यारोपः'। अध्यारोपसमनन्तरमपवादविधिः प्रवर्तते। अपवादो नाम वर्जनम्। आरोपविषयिणि ब्रह्मण्यारोपितानां पदार्थानामेकैकशो निराकरणं नाम अपवादविधिः। एकस्यैव कृत्स्नस्योपदेशविधेरिमौ द्वावंशौ भवतः। उभयोः प्रयोगकार्त्स्न्येनैव फलसिद्धिः, नैकेन केनाप्यभीप्सितवस्तुसंप्रत्ययः। मिलितावेवेमावंशौ विधेः स्वरूपं निष्पादयतः। आत्मस्वरूपविमर्शे प्रस्तूयमाने सत्यात्मनि शरीरेन्द्रियमनोबुद्धीनामारोपः प्रथमं प्रसाध्यते।

आत्मा शरीररूप एव, लोके तथैव प्रत्ययप्रसिद्धेरित्यध्यारोपः। न तथा= नात्मा शरीररूपः, विशरणरूपत्वात्, शरीरस्यानित्यरूपत्वात्। एतद्भिन्न आत्मा तु नित्यः, सर्वदैव एकरसत्वात्। एवमात्मा नायं देहः प्रसिध्यति। 'दिह उपचये' इति धातोर्निष्पन्नोऽयं देहशब्दः स्वात्मन उपचयापचयावभिधत्ते। आत्मा त्वेकरसत्वादुपचयराहित्याभावाद् न देहरूपतां धत्ते—इत्यपवादविधिना आत्मनो देहशरीरादिभ्यः पार्थक्यं सिध्यति।

'आत्मा मनःस्वरूपः, उभयोर्मननसारूप्याद्धेतोः' इत्यत्र वाक्ये आत्मनि मनसः समारोप इत्यध्यारोपांशः।

आत्मा न तथा, विभुत्वेन हेतुना, मनस्त्वणुरूपमेव क्षणेनैकेनैकेनैव पदार्थेन संयुक्तत्वाद् मनस आणवं सुप्रसिद्धम्। न्यायमते आत्ममनःसंयोगे पूर्णे एव पदार्थानां प्रत्यक्षं संभवति। आत्ममनसोरैक्ये तु तत्संयोगस्यानुपपन्नत्वात् पदार्थानां सार्वत्रिकं सार्वकालिकं च प्रत्यक्षं प्रसज्येत। इत्थमात्मनो न मनोरूपता सिध्यतीति त्वपवादविधिः।

इत्थमात्मा बुद्धिरूपो निश्चयजननसाधर्म्याद्धेतोरित्यत्रात्मनि बुद्धेरध्यारोपः प्रथमं विधीयते। तदनन्तरं युक्त्या ऐक्यं निरस्य तयोरपवादोऽत्र निर्दिश्यते।

इत्थमेवात्मनि अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयाख्यानां कोषाणां प्रथममध्यारोपो विधीयते लौकिकं व्यवहारमनुभवं चाद्रियद्भिर्विद्वज्जनैः, परन्तु युक्तिहेतूपन्यासेन तस्य एभ्यः समग्रेभ्यः कोषेभ्यः पार्थक्यं साध्यते।

इत्थमेव जाग्रत्-स्वप्न-सुषुप्तिस्थितं चैतन्यं प्रथमत आत्मन्यारोप्यते। अनन्तरं कारणोपन्यासपुरःसरमात्मनस्त्रिविधचैतन्याद् वैशिष्ट्यमुररीक्रियत इति त्वपवादविधिना स्थिरीक्रियते वेदान्तिभिः।

अयं निष्कर्षः—अध्यारोपापवादविधिनैव निष्प्रपञ्चस्यात्मनः स्वरूपोपलब्धि कर्तुं नूनं पारयन्ति विद्वज्जनाः, यदयमात्मा शरीरेन्द्रियमनोबुद्ध्यादिव्यतिरिक्तः पञ्चकोषातीतः स्थूल-सूक्ष्म-कारणशरीरेभ्यो भिन्नो नित्यो मुक्त एकरसोऽस्ति-जायते-वर्धते-विपरिणमते-अपक्षीयते-विनश्यतीति विकारषट्केन कथमपि नो विकृतिमाभजमानश्चैतन्यरूपः कोऽप्यलौकिकः पदार्थः।

वेदान्तोपदेशस्यायमेव विधिः संक्षेपेणात्र वर्णितः। अयमेव विधिर्नितान्तं वैज्ञानिकैर्नानाविज्ञानविभागेष्वज्ञातलक्षणस्य पदार्थस्य स्वरूपनिर्धारणाय सर्वदैव आद्रियते। दृष्टान्तरूपेणैतद्विषये बीजगणितस्य समीकरणपद्धतिमालोचयन्तु विपश्चितः।

$क^2 + २क = २४$ अत्र समीकरणे ककारोऽज्ञातलक्षणः पदार्थो वर्तते, यस्य स्वरूपं निर्धारणीयं वर्तते। तत्रोभयोः पक्षयोरेकाङ्को मेलितो यदा भवति, तदा समीकरणस्य स्वरूपं द्वितीयपङ्क्त्या निर्धारितं वर्तते। तृतीयपङ्क्तौ त्वस्य पिण्डीकृतं स्वरूपं निर्दिष्टम्। तस्यैव वर्गमूलकरणं तदधो निर्दिष्टम्। एतावत्पर्यन्तं त्वध्यारोप-

विधेरुपयोगो विधीयते। तदनन्तरमपवादविधिः प्रयुज्यते। आदौ य एव एकाङ्कः प्रथमं संयोजितोऽभवत्, स एवान्ते उभयतः पक्षाद् निष्काशितो भवति। एवं कृतेऽज्ञातमूलस्य ककारस्य मूल्यमायाति चतुःसंख्येति। समीकरणस्वरूपं साम्प्रतमित्थं विलसति—

अध्यारोपः

$$\text{क}^{२} + २\,\text{क} = २४ \qquad (\text{१ पङ्क्तिः})$$

$$\text{क}^{२} + २\,\text{क} + १ = २४ + १ \qquad (\text{२ पङ्क्तिः})$$

$$(\text{क} + १)^{२} = (५)^{२} \qquad (\text{३ पङ्क्तिः})$$

$$\text{क} + १ = ५ = ४ + १ \qquad (\text{४ पङ्क्तिः})$$

अपवादः

$$\text{क}\,(-१) = ४ + १\,(-१) \qquad (\text{५ पङ्क्तिः})$$

$$\therefore\ \text{क} = ४ \qquad (\text{निष्पत्तिः})$$

अत्र बीजगणितीयसमीकरणस्य निष्पत्तावध्यारोपापवादविधिरेव समाश्रीयते गणितज्ञैर्ज्योतिर्विद्भिः। अमुं विधिं विहाय नान्योपायोऽस्त्यज्ञातलक्षणस्य 'क' पदार्थस्य मूल्यनिर्धारणाय, न कोऽपि विद्यते पन्था अन्यदीयः। इत्थं चाध्यात्मिकजगति निष्प्रपञ्चस्य वस्तुनः स्वरूपोपलब्धिर्येन विधिना क्रियते, स एव विधिर्वैज्ञानिकैरप्युररीक्रियते भौतिकजगत्यज्ञातरूपस्य पदार्थस्य रूपनिर्धारणायापीत्यहो जागर्ति वेदान्तोपदेशविधेः किमपि सार्वदेशिकं सार्वकालिकं च माहात्म्यम्।

अध्यात्मविषये निष्प्रपञ्चतत्त्वस्य स्वरूपाववोधाय यथार्थरूपां पद्धतिमाविष्कुर्वद्भ्यः पथिकृद्भ्यो वेदान्तविद्भ्यो मनीषिभ्यः समस्तविपश्चितां प्रणामाञ्जलयो निपतन्त्विति स्वैरमुक्त्वा विरम्यते॥

# वेदान्तसिद्धान्ता लौकिकोन्नतेरपि भवन्ति साधकाः

श्रीमद्-आनन्दझा, लक्ष्मणपुरविश्वविद्यालये संस्कृतविभागे प्राध्यापकः ।

वेदान्तसिद्धान्ता लौकिकोन्नतिसाधका न वेति विप्रतिपत्तिः। तत्र वेदान्तसिद्धान्ता भवन्ति लौकिकोन्नतिसाधका इति विधिपक्षमाश्रित्यात्र किञ्चिदुच्यते। वेदान्त-सिद्धान्त-लौकिकोन्नतिशब्दानामर्थमनिश्चित्य नैव शक्यः कथञ्चिदपि पक्षः कोऽपि स्थिरीकर्तुमिति तत्तत्पदार्थस्य प्राप्तायां वक्तव्यतायां सर्वा उपनिषदो बादरायणीयानि सूत्राणि भगवद्गीता चेत्येते ग्रन्था भवन्ति वेदान्तशब्दप्रतिपाद्या इत्यस्य तत्र तत्र प्रतिपादिततयाऽत्रापि ग्रहणं तेषामौचित्यमावहत्येव वेदान्तशब्दबोध्यतया। यद्यपि क्वचिदुपनिषदां बादरायणसूत्राणामेव चोल्लेखः प्राप्यते वेदान्तशब्दप्रतिपाद्यतया, परन्तु "श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायाम्" इत्युल्लेखस्य प्रतितदध्यायान्तं दर्शनेनैतिह्यसिद्धतया प्रस्थानत्रयान्तःपातितया च तस्या अपि वेदान्तपदबोध्यत्वमौचित्यमावहत्येव। सिद्धान्तपदमभ्युपगम्यमानार्थपरमर्थाभ्युपगमपरं वा यथेच्छं शक्यते ग्रहीतुम्। लौकिकोन्नतिशब्दस्य सत्यपि बह्वर्थकत्वे प्रसङ्गाद्वर्तमानजीवनकाललभ्येष्टफलार्थकत्वम्। वेदान्तसिद्धान्ता इत्यत्र प्रतिपाद्यतया लुप्तषष्ठ्यर्थतया, आकाङ्क्षाबललभ्यत्वेन संसर्गतया वा समुपस्थितिः प्रोक्तसिद्धान्तपदार्थघटकोऽभ्युपगमश्च स्वीकारः, स च स्वसम्बन्धस्थापनम्। अर्थत्वं चेष्टत्वम्। तच्चोपायत्वेनात्र विवक्षितं नोपेयत्वेन, तस्योन्नतिपदबोध्यफलमात्रार्थनिष्ठत्वात्। तथात्रोपनिषद्ब्रह्मसूत्रभगवद्गीताप्रतिपाद्या उपाया विहिताः सन्तो वर्तमानजीवनसम्बन्धफलसाधका भवन्ति न वेति ? एतदर्थकत्वमेव लभ्यते सारल्येन प्रोक्तस्य विप्रतिपत्तिवाक्यस्य।

सति चैवं निषेधपक्षाश्रयिभिरियमेव मन्ये स्याद्युक्तिराश्रयणीया स्वपक्षसिद्धये यत् सर्वेषामेव हि वेदान्तानां नित्यशुद्धबुद्धमुक्तस्वभावेऽद्वितीये ब्रह्मण्येव ज्ञेये समन्वितत्वमित्यस्यैव विषयस्य वेदान्तदर्शनसमन्वयाध्यायप्रतिपाद्यतया स्वीकर्तव्यमेव विवेकिभिः परिहाय दुराग्रहं वेदान्तानां समेषामद्वितीयब्रह्ममात्रतात्पर्यकत्वम्। तथा च 'यत्परश्शब्दः स शब्दार्थः' इति सकलप्रसिद्धाभियुक्तोक्त्यनुसारं वेदान्तानां सर्वथा प्रवृत्तिनिवृत्तिसम्पर्कशून्यनिर्विशेषब्रह्मभिन्नतात्पर्यकत्वसामान्याभाववत्तया तथाविध-

स्यैवं चाद्वितीयस्य ब्रह्मणस्तदभ्युपगमस्य वा प्रकृतविप्रतिपत्तिघटकवेदान्तसिद्धान्तपदप्रतिप्रतिपाद्यतया कथं नाम शक्यते वक्तुं कथञ्चिदपि केनचिद्वर्तमानजीवनप्राप्यफलसाधकत्वं वेदान्तसिद्धान्तेषु ? फलानां सर्वेषामैहिकानां नियमतः प्रवृत्तिनिवृत्त्यन्यतरसाध्यतया वेदान्तसिद्धान्तभूतस्य ब्रह्मणस्तदभ्युपगमस्य वा नियमतः प्रवृत्तिनिवृत्तिसम्पर्कशून्यत्वादहेयोपादेयतया। अतो न वेदान्तसिद्धान्ता लौकिकोन्नतिसाधका भवितुमर्हन्ति कथञ्चिदिति।

अत्रैवं प्रतिवक्तव्यं यत्—सत्यं वेदान्तानां सर्वेषामद्वैतनिर्विशेषब्रह्मपरता, किन्तु न तथाविधाद्वैतब्रह्ममात्रपरता, सम्पादितायामेव सर्वेषु वेदान्तवाक्येष्वेकस्यां महावाक्यतायां सर्वेषु तेष्वद्वैतब्रह्ममात्रपरतायाः सम्भवात्। सत्यं च निर्विशेषं ब्रह्म, किन्तु निरस्ताविद्यानामेव दृष्टौ नातथाविधानाम्। न चोन्नतिं लौकिकीमिच्छन्तो ननु केचन भवन्ति निरस्ताविद्याः। तथा चाविद्याग्रस्तानां व्यावहारिकाणामस्मद्विधानां कृते वेदान्तवाक्यानां तेषां तेषामवान्तरस्य तात्पर्यस्य तत्तत्प्रवृत्तिनिवृत्तिसम्पर्कवत्सूपायेषु तेषु तेषु तत्तद्वेदान्तप्रतिपाद्यतत्तत्फलजनकेष्वपि सत्त्वेन तेषां तदभ्युपगमानां वाऽपि वेदान्तसिद्धान्ततया तत्तत्फलात्मकलौकिकोन्नतिसाधकतया च कथं न वक्तुं सुशक्यमिदं यद् वेदान्तसिद्धान्ता लौकिक्या अप्युन्नतेः साधका इति ?

अयं भावः—द्विविधं भवति तात्पर्यमवान्तरं तात्पर्यं महातात्पर्यं च। तत्र महातात्पर्यस्य चरमे महत्यर्थे भवत्यपि प्रथमं ह्यवान्तरं तात्पर्यं प्रथमे ननु लघीयस्यर्थे भवत्येव। यथा ध्वनौ काव्ये व्यङ्ग्यस्यार्थस्य मुख्यतात्पर्यविषयत्वेऽपि वाच्येऽर्थेऽपि तात्पर्यमवान्तरमभ्युपेयत एव सहृदयैः। अन्यथा व्यञ्जकाप्राप्त्या व्यङ्ग्यलाभस्यैवानुपपत्तेः। यथा समग्रस्य रामायणस्य शोकस्थायिभावे करुणरसे रामवद्वर्तितव्यं न रावणवदित्यत्रार्थे वा महातात्पर्यस्य सत्त्वेऽपि रामायणघटकस्य तस्य तस्य श्लोकस्य परस्परसम्बद्धस्वान्तर्गतपदवाच्यार्थात्मके वाक्यार्थेऽपि स्वीक्रियत एवान्तरं तात्पर्यम्। यथा वा समग्रस्य महाभारतस्य निर्वेदस्थायिभावके शान्तरसे, युधिष्ठिरादिवद्वर्तितव्यं न दुर्योधनादिवदित्यर्थे वा। महातात्पर्यस्य स्वीकरणीयतायामपि तदन्तर्गतानां तेषां तेषां विभिन्नघटनासम्पर्किणां श्लोकानां भवत्येवान्तरं तात्पर्यं तेषु तेष्वर्थेषु। तथैव तत्त्वमसीत्यादिना महावाक्येन साकं प्राप्तायां महत्यामेकवाक्यतायां जीवब्रह्मैक्यप्रतिपादनद्वारा भवतु नामाद्वितीयनिर्विशेषब्रह्मपरत्वं वेदान्तवाक्या-

नाम्, परन्तु विशृङ्खलस्य प्रत्येकं वेदान्तवाक्यस्य स्वार्थेऽवान्तरं तात्पर्यं भवत्येव। ते च स्वार्थभूतास्ते ते खलूपाया लौकिकोन्नतिसमर्पकत्वेन श्रूयमाणाः समुपलभ्यन्त एव तत्र तत्रेति कथं न शक्यं स्वीकर्तुं यद् वेदान्तसिद्धान्ता अपि लौकिकोन्नति-साधका इति ?

न चैहिकफलोपाये खल्ववान्तरतात्पर्यवत्यो ननूपनिषदो नोपलभ्यन्त इति शक्यते वक्तुम्, बहूनां तथाविधानामुपनिषद्वाक्यानामुपलम्भात्। तथाहि—ईशा-वास्योपनिषदि प्रथम एव वाक्ये "तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्" इत्यनेन यत्परस्वग्रहणवैमुख्यं प्रतिपादितं तस्मिन् न प्रोक्तया विचारपद्धत्या वेदान्त-सिद्धान्तत्वाभावो वा ऐहिकफलकत्वाभावो वा शक्यः केनाऽपि कथञ्चिदप्युपपाद-यितुम्, उपनिषत्प्रतिपाद्यतया प्रथमस्य, यशःफलकतया च द्वितीयस्य सर्वथैव तत्रा-भावात्। न च यशसो नैहिकफलत्वमित्यपि शक्यते वक्तुम्, एषणात्रयान्तःपातिन्या हि लोकैषणाया यशस एवेच्छायां पर्यवसानात्। नहि यशः केवलमैहिकं फलम्, किन्तु सर्वेष्वैहिकेषु तच्छ्रेष्ठं फलमित्यत्र मन्ये न स्यात् कस्यचित् सचेतसो विप्रतिपत्तिः। अत एव हि—

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥

इत्यत्र नीतिवाक्ये महतां यशस्येव भवति चिन्ता, न वपुषीति प्रतिपाद्यते सुस्पष्टम्। युक्ततरञ्चैतत्। कथमन्यथा यूवप्रचण्डदोर्दण्डदर्पखण्डनाय बद्धपरिकरा भारतीया वीराः प्राणानपि प्रियतरानगणयन्तो युद्ध्येरन् कृते स्वकीयस्य राष्ट्रस्य तदन्तर्वर्तिनः समाजस्य स्वस्य च यशोरक्षायै ? अत एव च "नास्ति येषां यशःकाये जरामरणजं भयम्," "कीर्तिर्यस्य स जीवति", "काव्यं यशसे," "मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्" इत्याद्या अप्युक्तयः समुपलभ्यमानाः प्राचुर्येण भवन्ति सङ्गताः। भवति च "जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा। आप्तेरादिमत्त्वाद्वा। आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद" इति माण्डूक्योपनिषद्गतौङ्कारो-पासनावाक्ये "आदिश्च भवति य एवं वेद" इति फलश्रुतेरपि सङ्गतिः साधुतया "आदिः प्रथमश्च भवति महताम्" इति शाङ्करभाष्येण, बहुषु महत्सु मध्ये प्रथमगणनीयत्वरूपं यशःप्राचुर्यमाप्नोति खल्वोङ्कारप्रथममात्रोपासक इत्यस्यैव लाभात्। न च "नास्ति येषां

यशःकाये जरामरणजं भयम्", "द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः" इत्याद्यभियुक्तोक्त्या न यशसा लौकिकफलत्वमिति वाच्यम्; सत्यपि तथात्वे वर्तमानजन्ममरणान्तःपातिकालसम्पर्कस्यापि तत्राक्षुण्णतया यशसो नैहिकफलत्वम्, तत्प्रापकोपासनादिक्रियात्मकानामुपनिषत्सिद्धान्तानां नैहिकोन्नतिसाधकत्वमित्यस्य वक्तुमशक्यत्वात्। एवं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इतीशोपनिषद्द्वितीयमन्त्रस्यापि श्रमात्मकस्य कर्मणोऽवश्यं विधेयताप्रतिपादकतया श्रमसिद्धान्तस्याप्युपनिषत्सिद्धान्तत्वेन वेदान्तसिद्धान्तत्वं मन्तव्यमेव। न च श्रमाणां तेषां तेषां कायिकवाचिकमानसानां तत्तत्फलोपपादकत्वेनानुभवसिद्धानामैहिकफलकत्वाभावः शक्यः समुपपादयितुं कथञ्चिदपि केनचित्, येन सत्यपि श्रमसिद्धान्तस्योपनिषत्सिद्धान्ततया वेदान्तसिद्धान्तत्वे न स्यादैहिकफलकत्वरूपमैहिकोन्नतिसाधकत्वम्।

एवमेव 'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत" इति कठोपनिषद्वाक्ये "प्राप्य वरान्निबोधत" इति खण्डवाक्येन श्रेष्ठान् जनान् प्राप्य निबोधत=तदुपदेशग्रहणं कुरुध्वमित्यर्थकेन सर्वप्राण्युपयोगिनः शिक्षासिद्धान्तस्याप्युपनिषत्सिद्धान्ततया वेदान्तसिद्धान्तत्वेन वाक्यार्थबोध-तदधीनप्रवृत्तिनिवृत्ति-तज्जन्यैहिकेष्टप्राप्त्यनिष्टविगमफलकत्वेनापि च वेदान्तसिद्धान्तस्यैहिकोन्नतिसाधकत्वं मन्तव्यम्। न च प्रोक्ते हि कठवाक्येऽद्वैतस्यात्मन एव ग्राह्यतया प्रतिपादनेन, तथाभूतात्मज्ञानस्य मोक्षमात्रफलकत्वेन मोक्षस्य चानैहिकफलत्वेन कथमेतत्कथनं युज्यते कथञ्चिदिति शक्यते वक्तुम्, महातात्पर्यस्याद्वैतात्मोपदेशग्रहणमात्रे सत्त्वेऽप्यवान्तरतात्पर्यस्यान्यत्रापि सम्भवात्। न च "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिसिद्धस्याध्ययनस्य स्मार्तस्नानबाध्यतयाऽदृष्टमात्रफलकत्वस्य प्राभाकरैर्व्यवस्थापिततया कथं शिक्षासिद्धान्तस्यैहिकफलकत्वं युज्यते वक्तुमित्यपि वाच्यम्, संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यतया वाक्यार्थज्ञानरूपदृष्टफलकत्वमेवेत्यस्य भाट्टैः साधितत्वात्, वेदाध्ययनस्य तथात्वाभ्युपगमेऽप्यध्ययनान्तरस्यैहिकमात्रफलकत्वात्, अदृष्टपदेन पुण्यात्मकस्य गुणस्य ग्रहणे तस्याप्यैहिकफलत्वात्। अदृष्टजन्यस्य स्वर्गादेर्लोकान्तरीयत्वेऽपि तज्जनकस्य पुण्यस्य स्वरूपत ऐहिकत्वमक्षुण्णमेवेत्यत्र विप्रतिपत्त्यभावाच्च।

यच्च मुण्डकोपनिषदि "सत्यमेव जयति नानृतम्, सत्येन पन्था विततो देवयानः" इत्यनेन सत्याश्रयणस्य सर्वोत्कृष्टत्वं प्रतिपादितम्, ततोऽपि वेदान्तसिद्धान्तस्यैहिकोन्नतिसाधकत्वं लभ्यत एव। दृश्यन्त एवाद्यापि सत्यवादिनो लोकसमादृताः।

नहि केनापि शक्यं वक्तुमिदं यल्लोकसमादरो नोन्नतिरैहिकीति । तुष्यतु दुर्जन-न्यायेन कथञ्चित्तथाभ्युपगमेऽपि "सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" इति पातञ्जल-योगसूत्रानुसारं समस्ततत्तत्क्रियाफलसिद्धिः सत्यवदनाधीनैव, यत्प्रतिपाद्यते वेदान्त-भूतया प्रोक्तया मुण्डकोपनिषदा । कथमेवं सति वेदान्तसिद्धान्तानां नैहिकोन्नतिसाध-कत्वम् ? "आदिश्च भवति य एवं वेद" इति माण्डूकश्रुत्या प्रकृतसमर्थनन्तु विहित-पूर्वमेव ।

तैत्तिरीयोपनिषदि यत्खलु पाङ्क्तप्रस्तावे "पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः, अग्निर्वायुरादित्यश्चन्द्रमाः, नक्षत्राणि, आप औषधयो वनस्पतयः, आकाशः, आत्मा इत्यधिभूतमिति लभ्यते, लभ्यते च यत्खलु "पाङ्क्तो यज्ञः, पाङ्क्तो यज्ञ इति श्रुतेः" इति शाङ्करभाष्यम्, ततस्त्वत्याधुनिकाः सर्वे नन्वैहिकोन्नतिसाधनभूता भौतिक-विज्ञानसिद्धान्ता अपि खल्वाविष्कृतिक्षेत्रपातिनो भवन्त्येव वेदान्तसिद्धान्ता इत्यनुभूयमानैहिकोन्नतिसाधनत्वानां तेषामुपनिषत्प्रतिपाद्यतया स्वीकृते वेदान्त-सिद्धान्तत्वे न शक्यः कथमप्यभ्युपगन्तुं वेदान्तसिद्धान्तानामैहिकोन्नति-साधनत्वाभावः ।

किञ्च, न चैवं तत्रैवोपनिषदि प्रतिपादितेभ्यः "वेदमनूच्याचार्योऽन्तेवासिन-मुपदिशति–सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः" इत्याद्येकादशानुवाकवाक्येभ्यो विश्वविद्यालयेषु तेषु तेषु दीक्षान्तसमारोहावसरे ननूपकुलपतिभिः कुलपतिभिर्वा गार्हस्थ्यजीवनपाथेयतयोपदेशत्वेन दीयमानेभ्यः समवगतानामाचारसिद्धान्तानां न वेदान्तसिद्धान्तत्वं नैहिकोन्नतिसाधनत्वं वेति शक्यं वक्तुम् ।

किञ्च, यो हि बह्वन्नोत्पादनसिद्धान्तो विश्वेषां विश्ववर्त्तिनां राष्ट्राणां कृते भजत एव सामान्येन समादरणीयतां सकलैहिकसमुन्नतिमूलभूततया, तस्यापि प्रतिपादनम् "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति, अन्नं प्रत्यभिसंविशन्ति । अन्नं न निन्द्यात् तद्व्रतम् । अन्नं न परिचक्षीत तद्व्रतम् । अन्नं बहु कुर्वीत तद्व्रतम् । तस्माद्यया कयाचन विधया बह्वन्नं प्राप्नुयात्" इत्यादिना समुपलभ्यत एवोपनिषदात्मके वेदान्ते तैत्तिरीयके । किमत्रान्तिमे हि वाक्ये श्रूयमाणम् "यया कयाचन विधया" इति न करोतीङ्गितमधुनात्यन्तमपेक्षितायां वैज्ञानिक्यामन्नो-त्पादनपद्धतौ ? सत्यामस्यां ननु वास्तविक्यां परिस्थितौ नेदमपि शक्यं वक्तुं

२

यदन्नोत्पादनसिद्धान्तो न वेदान्तसिद्धान्त इति बह्वन्नप्राप्तिर्वा नैहिकं फलं नैहिकी समुन्नतिरिति वा।

ऐतरेयोपनिषदि—"तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति। सा तस्यैतमात्मानमत्र गतं भावयति। सा भावयित्री भावयितव्या भवति" इत्यनेन यः खल्वयं दाम्पत्यसिद्धान्तः प्रसवसिद्धान्तो वा प्रतिपादितो यत्—अणीयानपि भौतिको बाह्यः खण्डः कस्मिंश्चिच्छरीरे कथञ्चित्प्रविष्टो नयति विकारं शरीरे तत्रेत्यस्य दृष्टचरत्वेऽपि तथाविधबाह्यभौतिकखण्डापेक्षया महत्त्वमावहन्नपि वर्द्धमानतया स्त्रीशरीरगतो भ्रूणपिण्डखण्डो यन्न करोति विकारं कमपि स्वाश्रये शरीरे तत्र तस्यायं हेतुर्यत् स्त्रियास्तस्याः स्वाङ्गानीव तदुदरस्थो भ्रूणपिण्डोऽसावपि गच्छति तदङ्गतामतिसम्पृक्ततया। भ्रूणभिन्नश्चान्यो भौतिकस्तत्र कथञ्चित् प्रविष्टो हि बाह्यः खण्डो न गच्छति तदङ्गभावम्, अतो हिनस्ति स्वाश्रयं शरीरं तत्, जनयति तत्र विकारमिति तस्योत्तरोत्तरं वर्द्धमानतया भारभूतमपि तं भ्रूणमितो हेतोस्तद्धारिणी महिला कापि भारापगमाय यन्न नाशयति तस्यायं हेतुर्यत् प्राणादपि परमं प्रियं पतिमेव स्वकीयं भ्रूणस्वरूपेण तेन स्वोदरे विराजमानमवगणयति सा निश्चिततया। पतिरप्यसावात्मस्वरूपस्य गर्भस्य धारणे कष्टं महद्विगणयन्त्यास्तस्याः स्वस्मिन् परं प्रेमाणं परिपश्यन् सर्वथा तदानुकूल्ये भवति तत्पर इति, तस्य च कथं नाम केनापि शक्यमपलपितुं वेदान्तसिद्धान्तत्वमैहिकोन्नतिसाधनत्वञ्च ?

छान्दोग्ये—"मटचीहतेषु कुरुषु आटिक्या सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास। स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे। तं होवाच" इत्यादिना प्रतिपादितया ह्याख्यायिकया प्रकटीक्रियमाण आपद्धर्मसिद्धान्तो यः सोऽप्यौपनिषदतया वेदान्तसिद्धान्तो वर्तमानजीवनरक्षकतया चैहिकोन्नतिसाधको मन्तव्य एव।

बृहदारण्यके च—"सा होवाच मैत्रेयी। येनाहं नामृता स्याम्, किमहं तेन कुर्याम्" इत्यादिना प्रतिपाद्यमानो हि स्त्रीसन्तोषसिद्धान्तः स्त्रीशिक्षासिद्धान्तश्च वेदान्तसिद्धान्ततया ऐहिकोन्नतिसाधनतया च स्वीकरणीयतामावहन्नुपगन्तव्य एव। सति चैवं कथमभ्युपगन्तुं स्याच्छक्यमेतद्यद्वेदान्तसिद्धान्ता नैहिकोन्नतिसाधका इति।

न च छान्दोग्यबृहदारण्यकोदाहृतयोः कथयोराख्यायिकात्वेन, आख्यायिकानाञ्च कल्पनाप्रसवतयाऽनैतिहासिकत्वेन तदुपगतस्य न सिद्धान्तत्वम्, न वा फलसाधकत्वमिति वाच्यम्, "आख्यायिकोपलब्धार्था" इत्याख्यायिकानिरूपणानुसारमाख्यायिकास्थलीयकल्पनानां तथोपलब्धान्यत्रिकपरिस्थितिमूलकत्वनियमेन तत्र सिद्धान्तत्वफलसाधकत्वयोरुभयोरभ्युपगमस्यौचित्यात् ।

एवं सिद्धान्तानामौपनिषदानामुक्तानां प्रदर्शिते तावदैहिकफलकत्वे वेदान्तसिद्धान्तानां नैहिकफलकत्वमित्यस्य वक्तुमशक्यतया सिद्धिमासादयत्येवेदं यद् वेदान्तसिद्धान्ता नन्वैहिकोन्नतिसाधका इति ।

"वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणाम्" इति शाङ्करभाष्यानुसारं वेदान्तदर्शनापरनामधेयानां सूत्राणामपि बादरायणीयानामुपनिषदनुगामितया तत्प्रतिपादितसिद्धान्तघटकानां कर्मसम्पृक्तानां सिद्धान्तानामप्यैहिकफलकानामुपलब्धिः सम्भवत्येवेति ब्रह्मसूत्रसिद्धान्तमपि तथाविधं समुपादाय शक्यत एव साधयितुं वेदान्तसिद्धान्तस्यैहिकफलकत्वम् । यथा हि "रमणीयचरणा रमणीयां योनिमापद्यन्ते; कपूयचरणाः कपूयां योनिमापद्यन्ते" इत्युपनिषदमनुवर्तमानं हि "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां च यथेतमनेवं च" इति सूत्रेण सानुशयस्यैव पुनर्जन्मप्रतिपादकेन लोकैर्हि सर्वैर्दुःखमनिच्छद्भिः सदाचारिभिरेव भाव्यम्, नासदाचारिभिरित्यर्थव्यञ्जकेन व्यक्तो हि सदाचारपालनसिद्धान्तः समाद्रियमाणः साधयत्येव तस्य समादरपराणां जनानां तेषां तेषां लोकप्रतिष्ठा-लोकदण्डाभावाद्यात्मकं सुफलं बहुविधमैहिकमिति ।

तथा "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः" इत्यनेन ब्रह्मसूत्रात्मके वेदान्तदर्शने "गौरवं महद्दर्शयन्त्या गीताया अप्युपनिषदनुगामित्वस्यावश्यमभ्युपेयतया गीतोक्तानपि सिद्धान्तानैहिकफलकानुपादाय शक्यत एव साधु साधयितुं वेदान्तसिद्धान्तानामैहिकोन्नतिसाधकत्वम् । यतो हि प्रदर्शितोपनिषदनुगामिप्रोक्तसूत्रानुगामिभिर्हि—

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।,
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ॥

इत्यादिभिर्गीतावाक्यैरभिधीयमानस्य स्वधर्मपालनसिद्धान्तस्य समादृतस्यार्ज्जुनेन "करिष्ये वचनं तव" इत्युक्तवता, सर्वथैवाविप्रतिपन्नतया विज्ञातमेव हि सुकीर्तिसहकृतराज्यश्रीप्राप्तिभूतमैहिकं सुमहत्फलमिति। न च "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इत्यनेन लब्धस्य स्वधर्मपालनसिद्धान्तस्य प्रोक्तसूत्रानुगामित्वे ऐहिकोन्नतिसाधकत्वेऽपि च "दैवी सम्पदुपगमसिद्धान्तस्य विमोक्षफलकतया तत्रैव प्रतिपाद्यमानस्य कथं प्रोक्तसूत्रानुगामित्वमैहिकफलकत्वं वा शक्यं वक्तुमिति वाच्यम्, तत्र दैवीसम्पत्पदेन सदाचारब्रह्मज्ञानयोरुभयोः, विमोक्षपदेनाचरणप्राप्यान्तःकरणवृत्तिविशेषरूपदुःखविमोकस्याज्ञानविमोकस्य च विवक्षितत्वात्। अन्यथा दुःखिनमर्जुनमुद्दिश्य प्रदीयमानस्योपदेशस्य "मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव" इत्येवंरूपस्यासङ्गत्यापत्तेः।

ननु सिद्धेऽप्येतावता विचारेण सिद्धान्तानामेवंविधानामुपनिषदादिप्रतिपाद्यतया वेदान्तसिद्धान्तत्वमादधतां खल्वैहिकोन्नतिसाधकत्वे न विप्रतिघटकविधिकोटिसिद्धिर्भवति तत्त्वतः, महातात्पर्यविषयस्याद्वैतस्यैव वस्तुतो वेदान्तप्रतिपाद्यत्वेन तस्यैहिकोन्नतिसाधकत्वस्य कथमपि साधयितुमशक्यत्वादिति चेन्मैवम्, तथापि तत्र तथात्वस्य वक्तुं शक्यत्वात्। तथाहि—विद्वत्सन्न्यासिनस्तु नियमेन नेष्टा नन्वैहिकोन्नतिः। विविदिषासन्न्यासिनामसन्न्यासिनाञ्च निष्कामकर्मनिष्ठानां कृते भवत्येवोपयोगित्वमैहिकोन्नतावद्वैतरूपस्य वेदान्तसिद्धान्तस्य। यतो हि भेदभावनाया शैथिल्यारम्भं विना न कथमपि सम्भवोऽनासक्तियोगस्य विविदिषाया वा। अत एव विरलाः समुपलभ्यन्तेऽनासक्ता विविदिषवश्च। कास्तास्तदुन्नतयः? नन्वैहिक्यो याः सम्भवन्ति तेषामिति चेद् रागद्वेषवैषम्योन्मुखतादिरूपास्ता इत्यस्य साधुतया वक्तुं शक्यत्वात्। न च तदादेर्नोन्नतित्वमिति वाच्यम्, विवेकानन्द-गान्धिप्रभृतीनां तदादिसम्पन्नतयैवोन्नतत्वेन ख्यातत्वात्।

न च तर्ह्यसाधारणानामेव केषाञ्चिज्जनानां तथाभूताद्वैतवेदान्ताल्लाभ इति, न साधारणजनानां ततः फलं किञ्चिदिति वाच्यम्, तथाविधमहापुरुषकृतनिष्कामकर्मफलस्य समाजनिष्ठस्य सुस्पष्टमुपलम्भात्। सर्वविधसामाजिकोन्नतिमूलभूतायाः सहकारिताया अपि परम्परयाऽद्वैतसिद्धान्तप्रभावितत्वाच्च। न च सहकार्यत्वसहकारित्वयोर्भेदाधीनतया कथं सहकारिताया अद्वैतसिद्धान्तप्रभावितत्व-

सम्भावनेति वाच्यम्, अङ्गानां मध्ये भवन्त्याः सहकारिताया अङ्ग्यैक्यनिबन्धनत्वेन शरीराणां शरीरिणां वा मध्ये परस्परं प्रभवन्त्याः सहकारिताया आत्मैक्यमूलकत्वसम्भवात्। यद्यपि ममत्वबुद्ध्याऽपि भवति सहकार्यसहकारिभाव इति सत्यम्; तथापि ममत्वबुद्धिस्थलेऽपि द्वैतभानशैथिल्यस्यानुभवसिद्धतयाऽद्वैतप्रभावस्य तत्राप्यवश्यमभ्युपेयत्वात्। अत एवोक्तं वेदान्तिप्रवरेणाप्पयदीक्षितेन—

त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते नाऽसौ।
कर्तव्यो ममकारः किन्तु स सर्वत्र कर्तव्यः॥ इति।

अत एव ममत्वबुद्धेः पराकाष्ठाप्राप्तौ प्रवृद्धायामत्यन्तं तन्मयतायां प्राप्तायां क्वचिद्भेदबुद्ध्युन्मूलनकथाऽप्युपलभ्यमाना भजते सामञ्जस्यं साधीयस्तया। न च वक्तुं शक्यमिदं यद्राष्ट्रस्य कस्यचन समृद्धये नापेक्षिता सहकारिता परस्परं मध्ये जनानां तद्राष्ट्रवासिनाम्। एवं चोक्तरीत्या द्वारीकृत्य सहकारितामद्वैतसिद्धान्त ऐहिकोन्नतिसाधको मन्तव्य एव। गीतोक्तस्याद्वैतसिद्धान्तस्यैवाभवत्प्रभावोऽसौ महानर्जुनस्य विषण्णस्योपरि यदसौ—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥

इति व्याहृत्य युद्धं विधाय लेभे कीर्तिसंवलितां राजलक्ष्मीम्। सर्वेषां भारतीयानां दर्शनानामङ्गभूतानामङ्गित्वमुपेयुषो वेदान्तस्यैवायं प्रभावो महानद्यापि यद्भारतीया ननु ध्वजिनी तथा साधनसौविध्यविगमेऽपि नूनमतिशेते ध्वजिनीरन्या राष्ट्राणामन्येषाम्। अन्यच्चेदमवधेयं विषयेऽत्र यद् वेदान्तसिद्धान्तभूताद्वैतरत्नलाभार्थं प्रबलामिच्छां दधतां जनानां कृते साधनचतुष्टयसम्पत्तेरत्यन्तमपेक्षिततया तदन्तःपातिनां नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमादिसम्पत्तीनां मानवताविकाशकानां गुणानां भवति विस्तारो जनतासु गतानुगतिकतया। अनन्तरं मोक्षाधिकारिणो वैरल्येन वेदान्तसिद्धान्ताद्वैतरत्नस्य सर्वसाधारण्याभावेऽपि प्रोक्तसमाजोपयोगिगुणप्रचारकतयैहिकोन्नतिसाधनत्वमविप्रतिपन्नतया मन्तव्यमेवाद्वैतसिद्धान्तस्येत्यास्तामिदानीमेतावदेव॥



# अद्वैतसिद्धान्ता राष्ट्रोन्नतौ प्रतिबन्धका उपयोगिनो वा ?

श्रीरामचन्द्रशास्त्री खनङ्गः, मीमांसाशास्त्राध्यापकः, वा. सं. वि. वि., वाराणसी ।

अस्य विषयस्य निर्णयार्थमस्माभिः प्रथमतोऽर्थशास्त्रे दृष्टिर्देया । तत्र कौटिल्यः पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्तावितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतमिति प्रतिज्ञाय विरचितेऽर्थशास्त्रे विनयाधिकारके प्रथमाधिकरणे तृतीयप्रकरणे राष्ट्रसमुन्नतय इन्द्रियजयमभ्यर्हिततया स्मरति ।

तस्य चारिषड्वर्गत्यागः प्रधानं कारणमिति प्रतिपादयति । यथोक्तं तेन—विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः; शास्त्रार्थानुष्ठानं वा। कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः । तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति । यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश । करालश्च वैदेहः । कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तस्तालजङ्घश्च भृगुषु । लोभादैलश्चातुर्वर्ण्यमत्या हारयमाणः सौवीरश्चाजबिन्दुः । मानाद्रावणः परदारानप्रयच्छन् । दुर्योधनो राज्यादंशं च । मदाद् दम्भोद्भवो भूताभिमानी हैहयश्चार्जुनः । हर्षाद्वातापिरगस्त्यामत्यासादयन् वृष्णिसङ्घश्च द्वैपायनमिति—

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥

एतेन विस्पष्टमिदमायाति यदिन्द्रियजयो राष्ट्रसमुन्नतेर्मुख्यं साधनम् । अत एव कौटिल्यः कृत्स्नं हि शास्त्रमिदमिन्द्रियजय इति वदन्नस्याभ्यर्हिततमत्वं मनुते । मनुरपि सप्तमे—

इन्द्रियाणां जये योगं समातिष्ठेद् दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥

महाकविर्भारविः किरातार्जुनीये किरातमुखेन दुर्योधनस्य पौरुषवर्णनप्रसङ्गे—

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥

इतीन्द्रियजयं न विस्मरति। अतोऽरिषड्वर्गपरित्यागेनेन्द्रियजयो राष्ट्रसमुन्नतावत्यावश्यकः। तदर्थमद्वैतसिद्धान्ता अत्यन्तमुपयोगिनः सिद्धाः।

जानन्त्येव भवन्तो यदद्वैतसिद्धान्तो न केवलं कपोलकल्पितः, अपि तु निरस्तसमस्तपुंदोषापौरुषेयश्रुतिमूलकः, तत्रापि प्राधान्येनोपनिषदो मूलानि, गीता च। अत एव तत्र तत्र ब्रह्मसूत्रेषु श्रुतेश्च, स्मरन्ति चेति बाहुल्येनासामेव मूलत्वेन ग्रहणं दृश्यते। तत्रारिषड्वर्गनिपातने यथाऽद्वैतसिद्धान्तः सफलस्तथा नान्य इति प्रतिपाद्यते।

अद्वैतवेदान्तस्य खल्वयं सिद्धान्तो यज्जगदिदं मिथ्येति जगतो मिथ्यात्वं श्रुत्या स्मृत्या प्रमाणेन तर्कैश्च यथा सिद्ध्यति तथा तत्तद्ग्रन्थपरिशीलनेन ज्ञातुं शक्यमिति नेह प्रतन्यते। इदानीं रामराज्यं सर्वैः काम्यते, तस्येदमेव कारणं यद् राजा रामो जगतो मिथ्यात्वं निश्चित्य राज्यकर्मणि प्रवृत्तोऽभूदिति योगवासिष्ठानुशीलिनां नाविदितमिति। अत एव वसिष्ठेनोक्तम्—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया तत्र संदृष्टः स्वल्पोऽप्याकारविभ्रमः॥

इयमवस्था तदैव सम्भाव्यते यदा जगतो मिथ्यात्वं निश्चितं स्यात्। सर्वेऽपि दार्शनिका निःश्रेयसं परमं प्रयोजनं स्वीयदर्शनस्य मन्यन्ते। तदर्थं विषयेषु वैराग्यं जनयितुं जगतोऽनित्यत्वं प्रतिपादयन्ति समर्थयन्ति च। अद्वैतसिद्धान्तिनो निःश्रेयसं परमं प्रयोजनं मन्यमाना अपि विषयेषु वैराग्यं जनयितुं मिथ्यात्वमेवानित्यत्वापेक्षया प्रबलं कारणं मन्यन्ते। साधनचतुष्टयसम्पत्तौ नित्यानित्यवस्तुविवेकः प्रथमं साधनम्, तेन इहामुत्रार्थफलभोगविरागरूपस्य द्वितीयस्य साधनस्योत्पत्तिः। तत्र वाचस्पतिमिश्रैर्भामत्याम् "नित्यानित्यवस्तुविवेकः" इत्यस्य "सत्यमिथ्यावस्तुविवेकः" इत्यर्थः कृतः, यथोक्तं तैः—नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यम्, तथा चास्थागोचरः। अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतम्, तथा चानास्थागोचरः। अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयत आ च सत्यलोकादाचावीचेः "जायस्व म्रियस्व" इति विपरिवर्तमानं क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्य अस्मिन् संसारमण्डलेऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते, ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात् प्रसंख्यानादिहामुत्रार्थभोगविरागो भवति" इति। कल्पतरुपरिमले नित्या-

नित्यवस्तुविवेकस्य सत्यमिथ्यावस्तुविवेक इत्यर्थकरणे किं कारणमिति विचार्याऽभ्यधायि दीक्षितैः, यथा—

नन्वेवं सति नित्यानित्यविवेकः प्रसिद्धनित्यानित्यविषय एवास्तु, किमर्थं सत्यानृतविषयत्वेन क्लिष्टव्याख्यानम् ? उच्यते—भाष्ये नित्यानित्यवस्तुविवेकानन्तरं नित्यफलप्रेप्सामनपेक्ष्य तद्विवेकमात्रेण सकलकर्मफलविराग उक्तः। नित्यवस्तुप्रेप्सया तत्प्राप्त्युपायान्वेषणं पश्चादुक्तम्। अयं क्रमोऽनित्यत्वमसत्यत्वमिति व्याख्याने युज्यते, न त्वस्थायित्वमिति व्याख्याने। अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोगलाभमालक्ष्य हि ततो विरज्यते, नान्यथा; अनृतासक्तस्तु तदनृतत्वनिश्चये सति तत्परित्यागे तथाविधसत्यवस्तुलाभप्रतिसन्धानाभावेऽपि ततो विरज्यते, नहि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तस्तन्मिथ्यात्वनिश्चये सति तत्परित्यागे सत्यरजतस्य स्वलभ्यत्वप्रतिसन्धानाभावे ततो न निवर्तते, किन्तु ततो निवृत्तः सत्यरजतप्राप्त्युपायं किञ्चित् पश्यति चेत् तत्र प्रवर्तते। तस्मान्नित्यानित्यवस्तुविवेकादिक्रमेण साधनचतुष्टयं ब्रह्मजिज्ञासाहेतुं वर्णयतो भगवतो भाष्यकारस्य सत्यमिदं सुखरूपमिति विशेषनिर्धारणमनपेक्ष्य कर्मफलानृतत्वनिर्धारणमेव वैराग्यादिक्रमेण साधनान्तराणां प्रवर्तकमित्याशयमालोच्य टीकाकारैराचार्यैश्च सामान्यतः सत्यमस्तीति विशिष्य बन्धमात्रमनृतमिति च विवेकः प्रथमसाधनत्वेन परिगृहीतः। तदनन्तरमक्षय्यादिवाक्यात् कर्मफलनित्यत्वसिद्धेस्तदनृतत्वमसिद्धम्, अनृतस्य तत्त्वज्ञाननिवर्त्यत्वनियमादिति शङ्कायां तदनृतत्वसिद्ध्यर्थमेव न्यायतस्तदनित्यत्वम्, अतःशब्देन सूत्रितमिति न किञ्चिदवद्यमिति। अतोऽनेन सिद्धमिदं यदनास्थामुत्पादयितुं यथाऽसत्यत्वमुपयोगि, न तथाऽनित्यत्वमिति।

इदानीं राष्ट्रस्य पतनोन्मुखीं प्रवृत्तिं वारयितुं तत्समुन्नत्यै च यानि तत्त्वानि राष्ट्रनायकैः काम्यन्ते प्रचार्यन्ते च, तानि सर्वाणि तत्त्वान्यस्माकमुपनिषदि वर्तन्ते, अत एव भगवता गीतायाम्—"अध्यात्मविद्या विद्यानाम्" इति ब्रह्मविद्यायाः सर्वश्रेष्ठत्वमभ्यधायि, तेषां च साधनानामविकला सिद्धिस्त्वद्वैतसिद्धान्तप्रचारणेनैव भविष्यतीति महता प्रयासेनास्य प्रचारो राष्ट्रेऽपेक्षितः। तदर्थमेतादृशं सम्मेलनं सर्वत्र, किं बहुना, राजधान्यां विशेषतोऽपेक्षितम्। अस्मिन् समये उत्कोचग्रहणस्य साम्राज्यं विद्यते। अस्माकमुपनिषदि प्राथमिकोऽयमुपदेशो यत्—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

'त्यक्तेन भुञ्जीथाः' इत्यस्य त्यागेन आत्मानं पालयेथा इत्यर्थः । इयं त्याग-भावना असत्यत्वनिश्चयं विना कथमप्युत्पादयितुं न शक्यते, लोभः सर्वथा त्याज्य इति प्राथमिकोपदेश उपनिषदा दीयते । तथा मदो न कर्तव्य इत्युपदेशः केनोपनिषदि प्राप्यते—

"ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति । तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ तदभ्यद्रवत् तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥"

एवं वायुसमीपे तृणाधाने सोऽपि वायुस्तं न शशाकादातुम् । इन्द्रो देवराजस्तु तत्समीपं गतोऽपि तेन संवादस्याप्यपात्रतामात्मनो विदित्वा सर्वे देवा अग्निवाय्विन्द्रा अभिमानं जहुः ।

अतोऽभिमानो मदः कदापि न कार्यः, कठोपनिषदि नचिकेतसे यमेन—

शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥

इति वरे दत्तेऽपि "श्वो भावा मर्त्यस्य" इत्यादिना कामपरित्यागः कृतः । सोऽयमुपदेशो राष्ट्रहितायैव प्रभवति ।

तथा अन्नसमस्या इदानीमतीव कठिना विद्यते, अस्यां परिस्थितौ तैत्तिरीयोपनिषदि—"तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्" इत्युपदेशः, सोऽपि राष्ट्रहितायैव । सर्वथा विचार्यमाणेऽर्थकामासक्तितनूकरणार्थमद्वैतसिद्धान्तश्रवण-मनननिदिध्यासनादिद्वारा सत्यमिथ्यावस्त्वालोचनं सर्वैरप्याधिकारिकैरवश्यं कर्तव्यमिति संक्षेपः ॥



# अद्वैतसिद्धान्ता राष्ट्रोन्नतौ प्रतिबन्धका उपयोगिनो वा ?

श्रीगणपतिशास्त्री हेब्बारः, साङ्गवेदविद्यालयः, वाराणसी ।

तत्र तावद् राष्ट्रं तदुन्नतिश्च प्रथमं चिन्त्येते । एकस्मिन् राज्यकर्मणि स्वभूतं स्वाम्यमात्यराष्ट्रदुर्गकोशबलसुहृदित्यङ्गसप्तकघटकं राष्ट्रमेकं राष्ट्रं भवति । तच्च त्रिधाऽवस्थितम्—भूमिः, जनपदः, जनश्चेति ।

भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये ।
तस्माद् गुणवतीं भूमिं भूत्यै नृपतिरावसेत् ॥

इति राष्ट्रसम्पदमुपक्रम्य—

सस्याकरवती पण्यखनिद्रव्यसमन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥
रम्या सकुञ्जरवना वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूर्विभूतये ॥

इति भूमिगुणगणस्य,

स्वाजीवो भूगुणैर्युक्तः सानूपः पर्वताश्रयः ।
शूद्रकारुवणिक्प्रायो महारम्भकृषीवलः ॥
सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः ।
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् धनी ॥
ईदृग्जनपदः शस्तः................................ ।

इति जनपदगुणगणस्य,

तत्र च 'सानुरागः, रिपुद्वेषी, धार्मिकः' इति विशेषणैर्जनपदनिवासिजनगणगुणगणस्य च निरूपणोत्तरम्—

तं वर्द्धयेत् प्रयत्नेन तस्मात् सर्वं प्रवर्तते ।

इति राष्ट्रसम्पदुपसंहारात् । 'धार्मिकः' इतीह वर्णाश्रमधर्मप्रधानो विवक्षितः, तस्यैव लोकस्थितिहेतुत्वेन राजनीतिशास्त्रकारैर्ऋषिभिरुपदर्शनात् । अन्यसमयेषु वर्णसङ्कर-कर्मसङ्कराभ्यां नाशस्य नियतत्वात् ।

उक्तत्रिविधराष्ट्रस्वरूपविभागे भूमिर्जनपदश्चाङ्गे । जनस्वरूपं राष्ट्रमङ्गि, पूर्वयोः परपुरुषार्थसाधनार्थत्वात् । ततश्च प्राधान्यात् तस्यैवेह उन्नतिश्चिन्तनीया । तस्य चोन्नतिर्नाम त्रिवर्गसमृद्धिः । सा च यथाधिकारम्—

न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाम्।
त्रिवर्गेणोपसन्धत्ते निहन्ति ध्रुवमन्यथा॥
त्रिवर्गं वर्द्धयत्याशु राज्ञो दण्डो यथाविधिः।

प्रणीतः…इत्यादिनिरूपणात्। त्रिवर्गोऽपि धर्मार्थकामाख्यः। मोक्षसाधकानां धर्माणां भागवतानां च धर्मेऽन्तर्भावनया त्रित्वमुक्तम्। अत एवोक्तम्—"स्वर्गानन्त्याय धर्मोऽयम्" इति। अत्र च धर्मो वेदशास्त्रविधिनिषेधाविरुद्धः। अविरोधश्चोपायविकल्पे कृतक्षणे राजनीतिशास्त्रपर्यन्तमीमांसयाऽवसितोऽनुष्ठेयो राष्ट्रधर्मः। अत एवोक्तम्—

धर्म्यामारेभिरे हिंसामृषिकल्पा महीभुजः।
तस्मादसाधून् पापिष्ठान् निघ्नन् दोषैर्न लिप्यते॥ इति।

तथैवासाधुषु प्रजाबाधकेषु पापिष्ठेषु कूटयुद्धनीतिरपि प्रयुक्ता नाधर्मायेत्याद्यप्यत एवोक्तम्—

सुनियतमुपहन्यात् कूटयुद्धेन शत्रून्
तिरयति नहि धर्मं छद्मना शत्रुघातः। इत्यादि।

तत्रैव जयमङ्गलायाम्—

विषेण माधव ! मायया वा शस्त्रेण गोविन्द तथाग्निना वा।
यैस्तैरुपायैररविन्दनाभ ! शत्रोर्वधं वेदविदो वदन्ति॥ इति।

शत्रुरिहाधार्मिकः पापिष्ठो न्यायवर्तिप्रजाबाधकः। अर्थकामौ चैतादृशधर्माविरुद्धौ उन्नतिघटकौ बोध्यौ, न तु दस्यूनामिवान्यायार्जितावर्थकामौ उन्नतिः। अत एव—

धर्मादर्थोऽर्थतः कामः कामात् सुखफलोदयः।
आत्मानं हन्ति तौ हत्वा युक्तया यो न निषेवते॥

इत्युक्तम्। इत्येवं राष्ट्रोन्नतिश्चिन्तिता।

अथाद्वैतसिद्धान्ताः स्मर्यन्ते। ते च द्विविधाः—अद्वैत एवाभ्युपगताः, इतरैरप्यभ्युपगताश्चेति। तत्राद्वैत एवाभ्युपगताः—"निर्गुणं ब्रह्म, तस्य निर्विकल्पवृत्तिः, ब्रह्म सत्यं जगन्मिथ्या, जीवो ब्रह्मैव नापरः" इत्यादयो विषयस्वरूपफलादयः। इतरैरप्यभ्युपगतास्तु तत्र विनियुक्तास्तत्साधनादयो वर्णाश्रमसामान्यधर्मादयो नित्यनैमित्तिककाम्यादिस्वरूपास्त्रयीव्यवहारा भागवतधर्मसाङ्ख्ययोगतन्त्रयन्त्रादयस्तदर्था लौकिकाः

पाशुपाल्यकृषिपण्यादिवार्ताव्यवहारा दुष्टनिग्रहशिष्टपरिपालनोपयुक्तदण्डनीतिव्यवहारा नानाविधशिल्पादिकलाव्यवहाराश्चानिषिद्धाहारविहारकामव्यवहाराश्चेत्यादयः। तत्र विनियोजकं प्रमाणं दिङ्मात्रमुदाह्रियते—

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"इति।

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।...
अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः।
स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्।...

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। इत्यादि।

अर्थाद् येषां येषां साक्षात् परम्परया वा विनियुक्तसाधनतया प्रयोजकतया वा चित्तशुद्धिद्वारा तदपरपर्यायभगवदनुग्रहद्वारा तदर्थतया वोपादानं तेषां सर्वेषामद्वैतसिद्धान्तत्वमेव। नहि भगवदर्पणबुद्ध्या फलासक्तिपरिहारेण विविदिषोद्देशेन वैषामुपादाने तथा क्रियमाणत्वे राष्ट्रस्य समृद्धिर्हीयते, परमोत्साहेन साधनानुष्ठानस्य यावद्ब्रह्मसाक्षात्कारं कर्तव्यतायाः अद्वैतसिद्धान्तत्वात्। किं बहुना, विहितं निषिद्धमनुभयं लौकिकमलौकिकं सामयिकं च सर्वमुपादेयतया हेयतया वा यथायथमद्वैतसिद्धान्ता एव।

तत्र च "एष पन्थाः, एतत् कर्म, एतद्ब्रह्म, एतत्सत्यम्, तस्मान्न प्रमाद्येत्, तन्नातीयात्, नह्यत्यायन्, पूर्वे येऽत्यायंस्ते पराबभूवुः" इत्यादिप्रमाणमुपादेयानामनतिक्रमणीयत्वादद्वैतसिद्धान्तत्वमाह।

न च काम्यकर्मणां कथमत्र प्रवेशः?

काम्येऽपि शुद्धिरस्त्येव भोगसिध्यर्थमेव सा।
विड्वराहादिदेहेन नह्यैन्द्रं भुज्यते फलम्॥

इति वार्त्तिककृता तदाहितशुद्धेर्भोगार्थत्वोक्त्या योगार्थत्वानुपदेशादिति वाच्यम्, तत्रापि वेदप्रामाण्यबुद्धिरूपचित्तशुद्ध्यंशेन कदाचिद् वेदेनैव "प्लवा ह्येते अदृढा यज्ञरूपाः", "नास्त्यकृतः कृतेन" इत्यादेः प्रामाण्यसिद्धिद्वारा प्रकृतोपयोगस्यावारणात्। न च तन्त्रादीनां कथं प्रवेश इति वाच्यम्,

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिध्यर्थं···तन्त्रमाश्रयेत् ॥

इत्यवैदिकतन्त्राणामपि तदधिकारिणां कृते उपादेयत्वस्य,

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ।
(भा० ११ स्कं० २७)

इति वैदिकतन्त्राणामुपादेयत्वस्य च बोधनात् ।

न च पाशुपाल्यादिकामव्यवहारान्तानामुक्तानां कथमनुप्रवेशो लौकिकानामिति वाच्यम्; वर्णाश्रमधर्मत्वेन वा तदर्थकर्मत्वेन वा प्रवेशात् । नहि पाशुपाल्य-कृष्यादीनामभावे दण्डनीतेरभावे आहारविहारवैधकामव्यवहाराद्यभावे विनियुक्तानामप्यनुष्ठानं सम्भवति । यथोक्तम्—

"पुत्रानुत्पाद्य धर्मेण"
यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माद् ज्येष्ठाश्रमो गृही ॥
(मनुः)

यामाश्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः ।
वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा ॥
(भागवते)

"अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः ।"
(कामसूत्रे)

इत्यादि । एवं विविधकलानामपि—

"षड्भिस्तर्कैरगम्योऽपि गम्यो गीतेन शङ्करः ।"

इत्यादिप्रमाणैर्यथाशास्त्रप्रयोगे चित्तशुद्धिपर्यवसायित्वादेवर्षिभिः सर्वा विद्याः कलाश्च प्रवर्तिताः । अत एव—

"कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।"

इति भगवान् विहितत्वाभावेऽनङ्गानामप्येतेषां सर्वेषां कर्मणां सत्त्वमाह । अत्र श्रीमधुसूदनसरस्वतीश्रीचरणाः—

"तदर्थं शुद्धब्रह्मज्ञानं तदनुकूलं तदर्थीयम्, भगवदर्पणबुद्ध्या वा क्रियमाणं कर्म वा तदर्थीयम्, सदित्येवाभिधीयते" इति । अर्थात् चित्तशुद्धिकरमिति सदर्थः ।

तथा च काम्यकर्माणि लौकिकान्यपि कर्माणि त्रिवर्गससमृद्धिकराणि यथाधिकारं फलासक्तिपरिहारेण भगवदर्पणबुद्ध्या यावच्चित्तशुद्धिर्यावद्वा भागवती श्रद्धा तावत् परमोत्साहेन कर्तव्यानीत्यद्वैतसिद्धान्तः स्थित एव। यथोक्तं भगवता—

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥ इति।

न चेह तावदिति कर्मावध्युक्तेस्त्रिवर्गसमृद्धिहानिस्ततः परस्तात् क्रियत इति मन्तव्यम्, तदनन्तरमपि संन्यासिधर्माणां श्रवणमननादीनां प्रथमस्य, भागवतधर्माणां श्रवणकीर्तनादीनां द्वितीयस्य भृशं कर्तव्यतया तत्रांशे राष्ट्रोन्नतिकरणात्। अधिकारभेदेन कर्तव्यभेदस्याद्वैत-तदितरसर्वसिद्धान्तसाधारणत्वात्। तेषामपि कर्मणां पूर्वोक्तदिशा राष्ट्रोन्नत्यन्तर्गतत्वात्। नहि कृषिद्वारा राष्ट्रोन्नतिं कुर्वन् कृषको वाणिज्यद्वारा तां करोति, न वा तथा कुर्वन् वणिग् यन्त्राद्याविष्कारद्वारा तां करोति, नहि सर्वः सर्वदा सर्वविधत्रिवर्गसमृद्धिं राष्ट्रस्य सर्वद्वार्भिः करोतीति क्वापि सम्भवति।

किञ्चैवंविधा अधिकारिणो विरला एव भवन्ति। तत्रापि—

ईश्वरानुग्रहादेव पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणामेव जायते॥

इति रीत्याद्वैतवासनाधिकारिणः सुतरां विरला वस्तुतः। एवञ्च राष्ट्रे शते नवनवत्यनुपातेन कर्माधिकारिण एव। कर्म च यथाधिकारमेव फलति, न सर्वः सर्वं करोतीत्यन्यदेतत्। इदानीं सर्वः सर्वं कर्तुमधिकारीति वर्तमानशासनं तु राष्ट्रस्य बुद्धेः कर्मशक्तेश्च विफलविनियोगेन त्रिवर्गवृद्ध्यानुन्नतिकरमिति, तथा नाद्वैतसिद्धान्तः। कर्माधिकारिणां विषये इतोऽप्यधिकं किञ्चिदग्रे वक्ष्यते।

अधुना अद्वैत एवाभ्युपगतानां सिद्धान्तानां विषये निरूप्यते। प्रथमं निर्गुणं ब्रह्म, सर्वाधिकराष्ट्रोन्नतिकरम्। तद्यद्यप्यखण्डम्; तथापि नास्ति, न भाति, न प्रियमिति त्रिविधव्यवहारजनकाज्ञाननिवृत्त्यपेक्षया सत्, चित्, आनन्द इति त्रिधा व्यवह्रियते। तत्सद्रूपेण सर्वनामरूपसत्ता तच्चिद्रूपेण सर्वनामरूपभानं तत्प्रियतैव सर्वनामरूपप्रियत्वम्। अत एव 'अस्ति, भाति, प्रियम्' इत्येव सर्वे नामरूपव्यवहारास्त्रैवर्गिका इष्यन्ते, प्रवर्तन्ते। अस्ति, भाति, किन्तु रजोगुणवशादप्रियमित्येव कृत्वा सर्वे व्यवहारा द्विष्यन्ते, परावर्तन्ते च। तदेवं सच्चिदानन्दस्वरूपं मुक्त्वा केनापि विशिष्ट-

ब्रह्मरूपेण सर्वव्यवहारो निर्वाह्यमानो नानुभूयते। यद्यपि "हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः" इत्यादिं सत्यं विद्यते, तथापि सर्वव्यवहारनिर्वाहस्तु हरेरेतावतैव, सच्चिदानन्दरूपेणैव, न तु विशिष्टरूपेण गृहीत्वेति सर्वानुभवः। नहि किञ्चिद् नाम रूपं वा विशिष्टरूपेण न हरिरूपं न वा हरादिरूपमिति धारणावान्; किन्त्वस्ति, भाति, प्रियमिति मन्वानो तेन न व्यवहरति। अस्त्यादिरूपेणामन्वानस्तु नैव तेन व्यवहरति। तस्मात् सच्चिदानन्दस्वरूपमेव हरिहरादेः सर्वव्यवहारनिर्वाहकम्। तावदेवाखण्डं निर्गुणं ब्रह्म। अनन्तकल्याणगुणानां वा वैज्ञानिकानां च वा नामरूपादीनां पर्यन्ते तावदेव वास्तवं रूपम्। तस्यैव सर्वनामरूपसत्तास्फूर्त्यादिसम्पादकस्य राष्ट्रे त्रिवर्गसमृद्धिरूपोन्नतेः कथं न सम्पादनोपयोगित्वम् ?

इदमेव सच्चिदानन्दस्वरूपं नानाहीननामरूपावच्छिन्नं रसाभासादिरूपेण प्रतिभाय अन्यायप्रवृत्तीर्भ्रमप्रमादालस्याद्युत्पाद्य राष्ट्रमधो नयति। आदर्शभूतेषु सात्त्विकेषु महागुणेषु रसरूपेण प्रतिभाय अप्रमादादिना राष्ट्रमुन्नयति। यथा श्रूयते—

"एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते, एष उ एव साधु कर्म कारयति तं यमुन्निनीषते" इति। इदमेव सर्वानाकर्षति। सर्वान् नर्तयति। स्वयमपाणिपादो जवनो ग्रहीता। अस्मादेव स्वरूपान् सर्वा सृष्टिरुत्पद्यते तिष्ठति लीयते चास्मिन्। न चाकर्तृ निर्गुणं ब्रह्मेत्यद्वैतसिद्धान्तस्तत्कथमेवमुच्यत इति वाच्यम्। तदुक्तम्—

कुर्वन्नपीह जगतां महतामनन्तं वृन्दं न किञ्चन करोति कदाचनापि।
स्वात्मन्यनस्तमितसंविदि निर्विकल्पे त्यक्तोदयस्थितिमतिः स्थित एक एव॥ इति।
(योगवासिष्ठे)

न चेदं विरुद्धम्; कुर्वत्त्वं मायिकम्, न कुर्वत्त्वं वास्तवम्, यतोऽत्र वा परत्र वा यावद्व्यवहारमेव कुर्वत्त्व-नाम-रूपादीनामुपलब्धेः। नहि सुषुप्तौ निर्विकल्पे समाधौ कैवल्ये वा तदुपलब्धिः प्रमाणैः प्रमीयते। एकस्य कैवल्ये सत्यपि तदानीमपि तदीयनामरूपादिदृश्यसत्त्वाभ्युपगमोऽन्येषां तत एव वन्ध्यफलः। अतस्तदीयतत्त्वज्ञानक्षणस्तदीयदृश्यपूर्वत्वाभाववानित्येवाद्वैतसिद्धान्तः।

इत एव जगन्मिथ्यात्वं निष्पतति। जगदनित्यत्वं सर्वे वादिनोऽभ्युपगच्छन्ति। तदेव मिथ्यात्वनियतम्। तथाहि—

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति न्यायात्। अनित्यत्वज्ञानापेक्षया मिथ्यात्वज्ञानम्—"नेह नानास्ति किञ्चन" इत्यादि प्रमाणप्रमितमतिशयेन वैराग्यायोपयुज्यते। स्वार्थासक्तिरतिशयिता राज्यकर्मानुष्ठाने प्रतिबन्धिका। तदभाव इन्द्रियजयोऽप्रमादेन राजनीत्यर्थानुष्ठानरूपश्च जगन्मिथ्यात्वज्ञाने सम्यक् प्रयोज्येते। अत एव राज्याधिकारिणां सदाचारेषु राजनीतौ कामन्दकेनोपदिश्यते—

जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभङ्गुरम्।
सुजनैः सङ्गतिं कुर्याद् धर्माय च सुखाय च ॥ इत्यादि।

किञ्च, हर्षशोकौ जगतः शत्रू, सर्वकार्यविघ्नकरत्वात्। तयोः प्रसङ्गे मिथ्यात्वं गृहीतं बुद्धिमवस्थापयति। एतदर्थमेव भगवतो गीतोपदेशः, श्रीरामाय योगवासिष्ठोपदेशश्च जातः। न जाने कति कति महापुरुषास्तथाविधोपदेशैर्मतिमास्थाप्य महद् राष्ट्रकार्यं विपत्तिष्वपि संसाधितवन्तोऽद्यावधि। अत एवान्वीक्षिक्यात्मविद्या (आत्मा=अनारोपितं स्वरूपम्, तस्य विद्या आत्मविद्या) स्यादीक्षणात् सुखदुःखयोरित्युक्ताया उपयोगमाह कौटिल्यः—

"बलाबले चैतासां हेतुभिरन्वीक्षमाणान्वीक्षिकी लोकस्योपकरोति व्यसनेऽभ्युदये च बुद्धिमवस्थापयति। प्रज्ञावाक्यक्रियावैशारद्यं च करोति।" इति।

एवं विकारहेतुषु सत्स्वपि निर्विकारतासंस्थापने द्वैतमिथ्यात्वस्योपयोगः श्रीभगवताप्युपदर्शितः—

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत्।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ इत्यादि,
आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ इत्यादि च।

अत एवाद्यापि लोके दुःखशोकप्रसङ्गेषु जनाः "मिथ्या संसारः, मिथ्यैवेदं जगत्, किं तत्र शोकेन" इति प्रबोध्य दुःखिनः सान्त्वयन्ति। येन सान्त्विता जनाः स्वकर्मणि यथासंस्कारमग्रे प्रवर्तन्ते।

किञ्च, सर्वं जगद् विहाय व्यष्टिपरिच्छेदं सर्वं विलाप्य सम्प्रसादे सौषुप्तस्थाने सर्वे प्राणिनः प्रतिदिनं गच्छन्ति। तदानीं सविकल्पवृत्त्यविषयेऽद्वैतसिद्धान्ते जाग्रति, अगृह्यमाणपार्थक्यतया तत्र स्थिताः प्राणिनः सर्वं श्रमं परिहाय पुनर्नवीभूताः सम्य-

गारोग्यमासाद्य राष्ट्रोन्नतिमार्गे समर्थतरा भवन्ति, इति को न जानाति ? यद्यपि तदानीमज्ञानं तिष्ठत्येव ।

'इयं संसारसरणिर्वहत्यज्ञप्रसादतः' इत्युक्तदिशाऽज्ञानसंस्कारलेशादपि विना न कश्चिद् व्यवहारः, तथापि सच्चिदानन्दस्वरूपं विना नाज्ञानेन केवलेन शक्यते किमपीति सुषुप्तावपि सच्चिदानन्दस्वरूपं भवत्येव । श्रूयते च—

"अहरहर्ब्रह्म गच्छन्तो न विदुः ।"

"यथा अस्मिन् आकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सँहत्य पक्षौ सँल्लयायैव ध्रियते, एवमेवायं पुरुषः एतस्मा अन्नाय धावति यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यतीति" ।

तथा "सर्वरोगहरी निद्रा" इत्यादि चायुर्वेदविदः; "आत्मज्ञानं महद्रसायनम्" इति च त एव वदन्ति । यथा—

त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ इत्यादि वाग्भटे ।

एवं च सति तत्किमिदानीं सुषुप्तावविकल्पसुखावस्थितिं सर्वथैव निवार्य राष्ट्रोन्नतिः सम्पद्यते ? ये पुनः तत्र सौषुप्तावस्थायां दुःखानुभवाभावमात्रं वदन्ति, ते तु 'सुखमहमस्वाप्समिति' सर्वानुभवमपलपन्ति, मूर्च्छाद्यवस्थयापि सुषुप्तिफलानां सिद्ध्यापत्तिमावाहयन्ति, तन्न युक्तम् । एवं च सत्येवाज्ञाने सविकल्पाविषयसत्सम्पत्तिं सर्वार्थोपक्रमपराक्रमावहामिति सर्वः प्रत्येतुमर्हति, किं तर्हि वाच्यम् ? अज्ञाननिवर्तिकायाः प्रमाणजन्याया निर्विकल्पकाद्वैतप्रमाया उपयोगः कियानिति । यद्यपि तादृशब्रह्मप्रमा मोक्षार्थतया नान्यत्र क्वचिद्विनियुज्यते, तथाप्यविनियुक्ता सत्येव ब्रह्मसम्पत्तिरवर्णनीयफला भवतीति स्वयमाह भगवान्—

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति ।

एतादृश उत्पन्नब्रह्मात्मसाक्षात्कारः सर्वमात्मौपम्येन पश्यन् "ब्रह्मविद् ब्रह्मैव भवति" इति रीत्या सर्वेषामात्मभूतो यत्किञ्च लोकोत्तरं कर्तुं कृत्वाप्यकर्तुं प्रभवति ।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं तस्य सात्त्विकम् ॥

तादृशश्च जनः—

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः।
वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः॥
कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत्।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते॥
यद्ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम्।
मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते॥
आत्मजायासुतादीनामन्येषां सर्वदेहिनाम्।
यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते॥

इति रीत्या वर्तयन् लोके ऐक्यभावनां यथोचितं विभावयन् राष्ट्रोन्नतये सर्वथैवोपयुज्यत इति किमु वक्तव्यम्?

एवं ब्रह्मात्मतासम्पत्तिर्न साक्षात्कर्मणा न वा कर्मसमुच्चितज्ञानेन वेति निर्णयेऽपि न जातात्मसम्पत्तिः कुतश्चिल्लोकसंग्रहकार्याद् निवार्यते। अत एवाह भगवान्—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥
यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥ इत्यादि।

तत्राप्याधिकारिकाणां ज्ञानिनां लोकोपकारार्थं यावदधिकारमवस्थितिर्यावदधिकाराधिकरणे चिन्तितैव। ज्ञानिनां सप्त भूमिका ज्ञानपरिपाकवशान्निरूपिता वसिष्ठेन—

ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा॥
सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका।
पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता॥ इति।

तत्र षष्ठीसप्तम्योः स्वप्रारब्धेन परप्रारब्धेन वा कथमपि दृश्यदर्शनाभावात् तादृशा भिक्षाचर्याद्यर्थमपि स्वप्रयत्नमन्तरेणैव ऋषभयोगीश्वरसदृशा उदासीनवदासीना उच्यन्ते प्राधान्येन—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ इति।

तेषामेव कार्यसामान्याभावः सदा स्वरूपावस्थितेरचलनाद् मुख्यः। भाष्ये शरीरस्थितिमात्रप्रयुक्तं भिक्षाचर्यं चरन्ति, न तद्व्यतिरेकेणान्यदिति विशेषाभावप्रदर्शनं मुख्यलक्ष्कतयैवेति युक्तम्, अवरभूमिकावस्थितस्यैवोत्तमभूमिकास्वारोहात्।

एवंविधाः षष्ठ्यादिभूमिकारूढा ये तेषां तु दर्शनमात्रमेव पुरुषार्थोन्नतिहेतुः, 'दर्शनादेव साधवः' इति। अन्येषां तु सहजतामासादितयोगानां स्वप्रारब्धेन परप्रारब्धेन ईश्वरेच्छया वा दृश्यदर्शनवतां व्युत्थानकाले "कुर्वन्नपि न लिप्यते" इत्यादेर्विषयतैव यथासंस्कारं प्रारब्धेन प्रवृत्तिसम्भवात्। सहजतामनासादितज्ञानयोगानां तदर्थं प्रयतमानानां विविदिषासंन्यासवतां त्वात्मज्ञाननिष्ठोपयुक्तं यावदेव कर्तव्यम्, नान्यदिति।

नन्वेतेऽवरभूमिकास्थिता अप्यव्युत्थानकाले राष्ट्रोन्नतिकरं किमपि न कुर्वन्तीति, अतो वृथेति शङ्का तु सर्वेषु समाना। यतः सर्वे स्वापकाले किमप्यव्यवहरन्तोऽनुपयुक्ता वृथा भवेयुः। द्वैतादिसिद्धान्तेष्वपि स्वस्वाभिमतध्यानकालेऽपि वृथा भवेयुः। यदि च तदानीं ध्यानात्मिका वृत्तिरेव व्यवहार उन्नतिरितरेषाम्, तदानीमिहाप्यखण्डाकारा ध्यानाद्यात्मिका वृत्तिरस्त्येव। मनोनाशवतां त्वद्वैतसिद्धान्त एवाभ्युपगम्यमानानां व्यवहारस्य तस्याप्यभाव इष्ट एव। तेषाम् 'दर्शनादेव साधवः' इत्युक्तम्। तावतैव राष्ट्रोन्नतिः। सैव राष्ट्रोन्नतिर्वा।

तथा च प्रोक्तेषु दृश्यदर्शनवत्सु सिद्धज्ञानयोगेषु सहजः समाचारो यथासंस्कारं भवति वक्ष्यमाणः। यथा—

प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन सः।
शान्तो विषयहेयत्वदर्शनश्रवणादिभिः॥
धर्माख्यानपुराणैश्च पुण्यतीर्थावगाहनैः।
पुण्याश्रमनिवासैश्च योगिभिर्नित्यसङ्गमैः॥

जडान्धवधिरादीनां तारतम्यावलोकनैः ।
व्याधिदारिद्र्यमरणैर्नारक्या यातनाश्रुतेः ॥
पुण्यक्षयप्रपतनकुयोनिश्रयणादिभिः ।
क्लेशप्रयत्नवैफल्याद् दुःखत्रितयघातनैः ॥
इत्यादिभिर्विभावैः स्यात् शमात्मा कस्यचिद्रसः ।
यथाशक्ति परित्राणं दुःखिनामविशेषतः ॥
विना रागेण सर्वत्र सुखिनामनुमोदनम् ।
शाकमूलफलैरन्यैः शरीरस्थितिसाधनम् ॥
व्रतोपवासनियमो वल्कलाजिनधारणम् ।
अहिंसा सर्वभूतानामविशेषादनुग्रहः ॥
अङ्गेषु कार्श्यं कार्कश्यं स्नानं त्रिषवणोचितम् ।
ऋज्वायतासनं ध्यानं नासाग्राहितलोचनम् ॥
विषयेभ्यो नियमनमिन्द्रियाणां निवृत्तये ।
इत्यादयो विशेषाः स्युः प्रायः शान्तेषु योगिषु ॥
मानापमानयोः शोकहर्षयोः सुखदुःखयोः ।
समवृत्तितया प्रायो नानुभावा भवन्ति हि ॥

असिद्धानां त्वेते सर्वेऽभ्यसनीयतया साधनानि भवन्ति । एवमेवेमं विवृते योगमिति भगवदुपदिष्टयोगानां विवस्वन्मन्विक्ष्वाकुप्रभृतिश्रीरामचन्द्रादीनामिव सिद्धज्ञानयोगानां सहजतया साध्यज्ञानज्ञानयोगानामभ्यसनीयतया रघूणां वक्ष्यमाणा धीरोदात्तसमाचारा राष्ट्रोन्नतिकरा भवन्ति । यथा—

सोऽहमाजन्मसिद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥
यथाविधिहुताग्नीनां यथाकालार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ इति ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ इति ।
वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ इत्यादि ।

एतादृशधीरशान्तधीरोदात्तसमाचारवद्भिः साध्या राष्ट्रोन्नतिर्न यन्त्रसहस्रेणापि शक्येति स्थितम् ।

एवंविधाः सर्वे सिद्धान्ता राज्याधिकारिणां प्रजापालनकर्मणि बलाधानाय मयैवोपदिष्टाः परम्परया राजर्षिष्वासन्नित्याह भगवान्—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः । इत्यादि ।

एवमद्वैतसिद्धान्तेनैकात्मभावनाभावे—

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां च प्रियं हितम् ॥

इति राजनीत्युक्तदिशा राज्याधिकारिणां राष्ट्रोन्नतितत्परता कथं सम्भवेत् ?

दयामास्थाय परमां धर्मादविचलन्नृपः ।
पीडितानामनाथानां कुर्यादश्रुप्रमार्जनम् ॥
नहि स्वसुखमन्विच्छन् पीडयेत् कृपणं नृपः ।
को हि नाम कुले जातः सुखलेशोपलोभितः ॥
अल्पसाराणि भूतानि पीडयेदविचारयन् ।

इत्यादिरीत्या क्लेशं सोढ्वापि न्यायेन प्रजापालनतत्परतायां जगन्मिथ्यात्ववाद आत्मैकत्वसिद्धान्तः कथं नोपकरोति ? कथं चैष सिद्धान्तो विशुद्धचित्तं जनमभये प्रतिष्ठाप्य त्यागसत्यशौर्याद्यनेकगुणगणानां उत्कर्षेण, तथैवान्यायेन प्रजाबाधकेषु दण्डधारणायापेक्षितपरपुरञ्जयत्वसमरविक्रान्तयोधित्वादिमहापौरुषेण च दुष्टशत्रुभीकरतायां नोपयुज्यते । अस्मिन् मिथ्याभूते जगति—

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥

"एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्, त्रिशीर्षाणं त्वाष्ट्रमहन्, मरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्, बह्वीः सन्ध्या अतिक्रम्य दिवि प्राह्रादीनतृणमहमन्तरिक्षे पौलोमान्, पृथिव्यां कालखञ्जान्, तस्य मे तत्र न लोम च मीयते।" इति वर्णितं दुष्टनिग्रहोपयोगि महद्धैर्यमित एव सिद्धान्तात् प्रभवतीति।

कर्माधिकारिणां विषये यदधिकं किञ्चिद्वक्तव्यमिहोच्यते यद्यपि सम्प्रत्यशुद्धचित्तवहुले काले न तादृशाः साक्षात्कृताद्वैतसिद्धान्ता बहवः सुलभाः, तथापि एतादृशसिद्धान्तानां परोक्षज्ञानबलादेव वा केवलं पूर्वेषां साक्षात्कृततत्सिद्धान्तानां महापुरुषाणां महावीरधीराणां चरित्रादवाप्तश्रद्धाबलादेव वा साम्प्रतं मतिरवस्थाप्यते जनेष्विति को वा अपलपेत्। साधनचतुष्टयसम्पन्ना अपि सम्प्रति कलौ वस्तुतो विरला इत्यतो भागवतधर्मानुष्ठानेन चित्तशुद्ध्या अद्वैतसिद्धान्तसम्पत्तिर्महात्मभिर्ऋषिभिः सत्पुरुषैश्च श्लाघ्यते। तेन च पथा सम्प्रति प्रतिपद्यन्ते यथाशक्ति जना इति स्थितम्। अत एवाद्वैतसिद्धान्तमिश्रा भक्तिग्रन्था भाषास्वपि सत्पुरुषैर्निबद्धाः। यथा—

यन्मायावशवर्तिविश्वमखिलं ब्रह्मादिदेवासुरा
यत्सत्त्वादमृषैव भाति सकलं रज्जौ यथाहेर्भ्रमः।
यत्पादप्लवमेकमेव हि भवाम्भोधेस्तितीर्षावतां
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम्॥ इति।
रजत सीप महँ भास जिमि जथा भानुकर वारि।
यदपि मृषा तिहुं काल सोइ भ्रम न सकै कोउ टारि॥

इत्यादि रामचरितमानसे। येन जनानामनार्यता क्रूरता रागद्वेषादिना परस्परद्रोहश्च शाम्येदिति।

ये तावद् द्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-द्वैताद्वैतादिसिद्धान्तास्तेऽपि तत्तत्सिद्धान्ताधिकृतजनोद्देशेन यावत् चित्तशुद्धि यावच्च भगवदनुग्रहसिद्धि तैस्तैरादरेणानुष्ठेया इत्येवंरूपेणाद्वैतसम्मत्या तेषु विषयेष्वद्वैतसिद्धान्तस्य विरोधाभाव एव। तथा ह्यत्र विषये श्रीगौडपादाचार्यकारिका—

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते।
तेषामुभयथा द्वैतं तेनायं न विरुध्यते॥ इति।

अत्र श्रीशाङ्करभाष्यम् —

"केन हेतुना तैर्न विरुध्यत इत्युच्यते—अद्वैतं परमार्थो हि यस्मात्, द्वैतं नानात्वं तस्याद्वैतस्य भेदस्तद्भेदस्तस्य कार्यमित्यर्थः। "एकमेवाद्वितीयम्, तत्तेजोऽसृजत" इति श्रुतेरुपपत्तेश्च, स्वचित्तस्पन्दनाभावे समाधौ, मूर्च्छायाम्, सुषुप्तौ चाभावात्। अतस्तद्भेद उच्यते द्वैतम्। द्वैतिनां तु तेषां परमार्थतश्चापरमार्थतश्चोभयथाऽपि द्वैतमेव। यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानाम्। तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः। 'इन्द्रो मायाभिः पुरुरूप ईयते' 'न तु तद्द्वितीयमस्ति' इति श्रुतेः।......ततः परमार्थतो ब्रह्मविद् आत्मैव द्वैतिनाम्। तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः" इति।

परमार्थतोऽपरमार्थतश्चोभयथापि यतस्तेषां द्वैतमेव ततस्तेषु परस्परं कलहो दुर्वार इत्यपि तैरेवोक्तम्—

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते॥ इति।

अत्र भाष्यम्—

"इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात्। कथं ? स्वसिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हतादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिताः। एवमेवैष परमार्थो नान्यथेति तत्र तत्रानुरक्ताः, प्रतिपक्षं चात्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं विरुध्यन्ते। तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते, यथा स्वहस्तपादादिभिः। एवं रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग् दर्शनमित्यभिप्रायः" इति।

एवं बौद्धजैनम्लेच्छादीनामपि समया प्रधानवैदिकमताविरोधं यावत् तत्तदधिकारिभिरनुष्ठेयत्वे नाद्वैतमतं विमनुते, "म्लेच्छानां कल्पिता धर्माः" इत्यादिवचनात्।

ये तु बौद्धवादैरवैलक्षण्यं विपर्यस्यन्ति वैदिकाद्वैतवादे; तैः सम्यगध्येतव्यम्। सच्चिदानन्दस्वरूपं सर्वाधिष्ठानमनन्तं स्वशक्त्यैव केवलं सर्वकार्यनिर्वाहसमर्थ-

मद्वैतम्। निरधिष्ठानमनानन्दमसद् विच्छिन्नम् अप्रमाणं, शून्यं वा बौद्धवादः कथमसतः सज्जायेतेत्यनुपपन्नः कथं राष्ट्रोन्नतये प्रभवेत्।

एवमेतावताऽद्वैतसिद्धान्ता अविरोधेन सर्वान् सिद्धान्तान् तत्तदधिकारिषु स्थापयन्तो राष्ट्रे यथामर्यादमैक्यस्थापनाय प्रोक्तराष्ट्रोन्नतये सर्वाधिकमुपयोगिनो दृश्यन्त इति।

अत्रैकः प्रश्नः—

चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्॥

इत्युक्तदिशा अद्वैतसिद्धान्तेऽपि ज्ञाते नवनवत्यनुपातेनाद्वैतसाधनकर्माद्यनुष्ठातारो जगति इतराविरोधमद्वैतमुद्दिशन्तोऽपि द्वैत एव व्यवहरन्ति। सर्वेषामपि व्यवहारेषु द्वैतं मिथ्येत्येव शास्त्रसिद्धमिति मन्यमानः सर्वाणि म्लेच्छान्तद्वैतमतानि, यथा हस्तपादादिरित्युक्तदिशा रागद्वेषाभावात् तत्तदधिकारिषु स्थापयतु काममद्वैतसिद्धान्तः, परं तानि तु मतानि। एवमेवैष परमार्थः, नान्यथेति तत्र तत्रानुरक्तान्यद्वैतव्यवहारेणाप्यात्मनः प्रतिपक्षतां भ्रान्त्यैव मन्यमानानि रागद्वेषोपेतानि विरुध्यन्ते। उपायप्रयोगे षाड्गुण्यप्रयोगे च स्वबलाधिक्ये सति सम्भवे उन्मूलनमेव सर्वथाऽद्वैतव्यवहारस्यापि तानि कुर्युरिति कथं तेषां तेषां तत्तदधिकारिष्वेव वा कामं स्थापयन् न करोति शत्रुशेषस्थापनम्? कथं चैवंकरणमद्वैतसिद्धान्तस्य ध्रुवनीत्यनुष्ठानमिति चेत्, व्यवहारेऽपि स्वबलिष्ठतां संरक्षतैवाद्वैतसिद्धान्तेन तेषामेव सर्वेषामुपकाराय स्थातव्यम्, तानि च तत्तन्मर्यादायां स्थापनीयानि। अन्यथा तानि तु परस्परोन्मूलनायैव प्रवर्तेरन्।

यथा सर्वं भूमण्डलमेकं राज्यं कृत्वा सर्वेषां राज्यानां परस्परविरोधवारणाय उन्मूलनमेव सर्वेषां तेषां कथं न कार्यमितिवदयं प्रश्नः। अत्रोत्तरमपि तथैव। प्रसवधर्मिण्यां प्रकृतौ भिन्नभिन्नरुचौ भिन्नभिन्नस्वभावके लोके नानामतानि दुर्वाराण्युत्पद्यन्त एव, न सर्वथोन्मूलयितुं केनापि शक्यन्ते। एकस्योन्मूलने तादृशस्यान्यस्य शतस्योत्पत्तिर्भवति। तस्मात् सर्वव्यवस्थापकेन मतेन बलिष्ठतयाऽवस्थाय तत्तन्मर्यादायां तेषां तेषामवस्थापनमेव तत्रोपायः। तावदर्थमुपयुक्तं मर्यादाति-

क्रमणदण्डनमवश्यमेव । तावदवश्यमेव यावता सर्वव्यवस्थापकस्य बलिष्ठता प्रथमरक्षिता स्यादिति ।

एवमद्वैतसिद्धान्तस्यातीवोपयोगे सत्त्वेऽपि सर्वमतवादिभिरपि कार्यकाले यथाकथञ्चिदाश्रयणीयत्वे स्थितेऽपि योऽयं प्रश्न उपतिष्ठते "ते राष्ट्रोन्नतौ उपयोगिनो न वा" इति तत्र किं कारणमिति समालोचनीयम् ।

चित्तशुध्यर्थं स्वस्वकर्माधिकारिणां राजसतामससंस्कारवतां शुद्धचित्ताधिकारिकभूमिकासु "कलौ वेदान्तिनः सर्वे फाल्गुने बालका इव" इति रीत्या प्रवेश एव कारणं प्रतिभाति । ते हि केवलं वाचा वेदान्तमाश्रित्य स्वसंस्कारानुरूपं कायक्लेशभयाद् राजसं त्यागम्, प्रमादालस्यनिद्राद्यैस्तामसमेव "किमिह कृतेनाकृतेन वा" इति वदन्तोऽकृतपक्षं समाश्रयन्तेऽसात्त्विकम् ।

"यावत्सत्त्वं हि देहस्य स्वभावो नातिवर्तते" इति तत्संस्कारानुरूपं तत् ।

ये तु पुनर्धीरोदात्तसंस्कारप्रधाना धीरशान्तसंस्कारप्रधानाश्च विशुद्धचित्ता ज्ञानभूमिका आरोहन्ति, तेषां यावद्दृश्यदर्शनं स्वीयलोकोत्तरसंस्कारानुरूप एव व्यवहारः । 'कुर्वन्नपि न लिप्यते' इति कृतपक्षमाश्रिताः स्वीयोत्तमप्रारब्धेन परप्रारब्धेन ईश्वरेच्छया वा महते लोकाभ्युदयनिःश्रेयसाय भवन्तीति स्थितेरुत्तमाधिकारिणो वेदान्तिनः सुतरां राष्ट्रोन्नतये अपेक्ष्यन्ते, इत्यत्र तु न सन्देहः ।

अन्यथा राष्ट्रोन्नतिदृष्ट्या—'स कालेनेह महता योगो नष्टः परन्तप ।'

इत्येव न चेत्सम्पूर्णतया अंशत एव वा भवति । अत्र श्रीमधुसूदनसरस्वतीश्रीचरणाः—

"स एवं महाप्रयोजनोऽपि योगः कालेन महता दीर्घेण धर्मह्रासकरेणेदानीमावयोर्व्यवहारकाले द्वापरान्ते दुर्बलानजितेन्द्रियाननधिकारिणः प्राप्य कामक्रोधादिभिरभिभूयमानो नष्टो विच्छिन्नसम्प्रदायो जातः । तं विना पुरुषार्थाप्राप्तेरहो दौर्भाग्यं लोकस्येति शोचति भगवान् ।"

एवं च कथमप्यद्वैतसिद्धान्ताः श्रवणमननादिद्वारा, श्रवणकीर्तनादिभागवतधर्मद्वारा वा यथायोग्यं सम्यगासादिता राष्ट्रोन्नतये सर्वथैवोपयोगिन इति दिङ्मात्रं प्रपञ्चितमिति ।

५

संक्षिप्तनिष्कर्षः—यथा गणितसिद्धान्ते तदधिगमं यावद् विद्यार्थी न तदनुकूलव्यतिरिक्तकार्यवान्, परस्तादधिगत्यनन्तरं कश्चिद् यथासंस्कारं तत्सिद्धान्त एव रममाणोऽध्यापयंश्च तमेव सिद्धान्तं यावज्जीवं नान्यत्कुरुते, कश्चित्त्वनन्तरं यथारुचिसंस्कारोत्साहं विज्ञानादिविभागान्तरेषु तत्सिद्धान्तावगमाहितबलाधान उद्युङ्क्ते, तथापि सर्व एव राष्ट्रोन्नतिं तत्तद्रूपां कुर्वन्तीत्येव, तादृश्येवेह स्थितिः।

साधकाः, सिद्धेषु तावन्मात्रसंस्काराः, धीरोदात्तादिलोकसंग्राहकमहापुरुषसंस्काराः, ऋषभयोगीश्वरादय इव लोकव्यवहारातीतभूमिकारूढास्तत्तद्रूपां राष्ट्रोन्नतिं कुर्वन्त्येव विधिनिषेधनियम्या इति स्थितिः।

दाम्भिकास्तु नैतावता समर्थ्यन्त इति। युगपत् सर्वं कर्तुं समर्थस्तु ज्ञानी—

शब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्ये च वर्तितुम्॥

इतीश्वरोपाधि = परं ब्रह्मैव विजयतेतरामिति॥



# अद्वैतसिद्धान्ता राष्ट्रोन्नतावुपयोगिनः

श्रीप्रमवल्लभत्रिपाठी, धर्मशास्त्रविभागाध्यक्षः, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी।

मनुष्यस्य प्रकृतौ पर्यालोच्यमानायामिदं विज्ञायते यन्मनुष्यः समाजसेवनरसिकः प्राणीति। मनुष्यो ह्यात्मानं समाजेऽन्तर्भाव्यैवात्मानं सुखिनं प्रत्येति, समाजाद् बहिष्ठो मनुष्य आत्मानमेकाकिनं दुर्बलमसहायं च प्रतिपद्यमान उत्साहाद्धीयते, आपद्भ्यश्चात्मनं परित्रातुमसमर्थं स्वमवैति। अतो हि स समाजमध्ये स्थितावेवात्मानं सुखिनं सहायवन्तं चानुभवति। अत एवाभाष्यते—

पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह।
पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह॥ इति।

न केवलं मनुष्यः समाजसेवनरसिकः प्राणी, किन्त्वनामिषभुजः सर्वेऽपि प्राणिनः समाजसेवनरसिका एव भवन्ति। अत एव हि गावो महिषा हरिणा हस्तिनोऽश्वादयश्च स्वसजातीयैर्मिलित्वैव चरन्ति, छायायां सह निषीदन्ति, रोमन्थं वर्तयन्ति, जलाशये पानीयं पिबन्ति, सम्भूयैव गोष्ठादिकमासीदन्ति। किं बहुना, आरण्या अनामिषभुजो गवादयश्च प्राणिनः सम्भूयैव चरन्ति, शेरते च। युक्तं चैतत्, श्वापदेभ्य आमिषभुग्भ्यो हिंसापरायणेभ्यो जन्तुभ्य आत्मानं परित्रातुमन्योन्यसाहाय्यग्रहणार्थं तैः संभूय वर्तनमाकाङ्क्षितं भवति। ये खलु मांसाहारिणः सिंहव्याघ्रभल्लूकमार्जारश्वप्रभृतयः प्राणिनः सन्ति, न ते एवं सजातीयैः संभूय जीवन्ति, किन्तु गुहासु बिलेषु वा एकाकित्वेनावस्थाने, अहिंसकप्राणिमारणार्थमेकाकितया संचरण एव रुचिं बिभ्रति।

प्रकृत्या हिंसोपयोगितीक्ष्णदंष्ट्रानखरादिविधुरतया आमिषपाचकतीव्रपित्तशून्यजठरतया च सृष्टोऽयं मनुष्यः, अहिंसकशाकाहारप्राणिकोटिनिविष्टोऽनामिषभुक्प्राणिसामान्यानुवृत्तं समाजसेवनव्यसनं यदि रोचयेत्, नात्रास्वाभाविकं किञ्चित् संलक्ष्यते। तथा च समाजसेवनव्यसनिना मनुष्येण तदैव सुखिना भूयेत, यदा परे मनुष्या अस्यापदं नोत्पादयेयुः, एनं न हिंस्युर्न च दूनयेयुः।

मनुष्यसमाजे परो न हिंसनीयः, परस्यापन्नोत्पादनीया, परस्य प्रतिकूलं च किमपि न चेष्टनीयम्। स्वार्थवशेनापि परस्यापकारो न करणीयः, यावच्छक्ति परस्योपकार एव सहर्षं करणीयः, इत्येते सद्भावा यावन्न वरीवृद्ध्येरन्, तावन्न मनुष्येण सुखिना निर्भयेन च भवितुं शक्येत। यावच्चैकैको मनुष्य इमान् सद्भावान् मरणपर्यन्तास्वापत्सूपस्थितास्वप्यात्मसात् कुर्वीत, तदैव मनुष्यसमाजः, तत्स्थ एकैकोऽपि मनुष्यः, अवरतो मनुष्यकृतविपत्तिविधुरः परिचितनानामनुष्यकृतविविधोपकारभाजनं सुखशान्तिभ्यां संवलितं मधुरं जीवनमतिवाहयन् विजयेत।

एते सद्भावा मनुष्येषु तदैव वृद्धिमासीदेयुर्यदा ते प्रतीयुः—"अहम् अजरोऽमरः शरीरे म्रियमाणेऽपि नाहं म्रिये। पूर्वजन्मकृतपुण्यपापकर्माणि मयाऽस्मिन् जन्मनि परलोके उत्तरजन्मस्वपि वा अवश्यं भोक्तव्यान्येव। साधुकर्मसु कृतेषु सुखभोगोऽवश्यंभावी, असाधुकर्मसु कृतेषु दुःखभोगश्चावश्यंभावी। अनुपकारिणे मया सश्रद्धं क्रियमाण उपकारोऽस्मिन् जन्मनि, अनन्तरजन्मन्यपि वा प्रभूतं सुखं प्रसुवीत, प्रमादेनापि कृतः परापकारो न निष्फलो भविष्यति, तस्य कटुफलं मया भोक्तव्यमेव भविष्यति" इति।

इमे प्रत्ययाः सर्वे ब्रह्मविद्यायामेवायतन्ते। इयं हि इदं सत्यं सयुक्तिकं निष्कृष्य प्रकाशयति—यज्जीवात्माऽजरोऽमरो नित्यः, तस्य चायं संसारः कर्ममूलः। कर्मफलं च प्रायश्चित्तेऽकृतेऽवश्यं भोक्तव्यमेवेति।

इदं देहाद्यतिरिक्तस्य नित्यस्य कर्मफलभोक्तुरात्मनो ज्ञानमेव धर्माधर्मप्रवृत्तिनिवृत्त्योर्निदानतां भजते। यतो हि देहात्मवादी न पारलौकिकाय धर्माय चेष्टेत, नापि पारलौकिकदुःखानुभवहेतोः पापान्निवर्तेत। अत एवोक्तं नीतिवाक्यामृते सोमदेवसूरिणा—

"असत्यात्मनः प्रेत्यभावे विदुषां विफलं खलु सर्वमनुष्ठानम्" इति, "अत आत्मनो नित्यत्वात् कृतं शुभाशुभं कर्म कदाऽपि न मोघं भवति। अस्मिन् जन्मन्यदत्तफलमपि तदग्रिमजन्मन्यवश्यं फलं दद्यादेव" इति च। देहाद्यतिरिक्तात्मसद्भावज्ञाननिबन्धनेयं कर्मफलावश्यंभावधारणैवानुष्ठानकाले फलापर्यवसायिष्वपि जन्मान्तरादौ फलदानहेतुभूतेषु सुकृतेषु पुरुषं प्रवर्तयति, तथा जन्मान्तरदुःखोदर्केभ्योऽपि पापेभ्यो निवर्तयति। किं बहुना, एतादृशमात्मज्ञानमेव मनुजस्य

मानवतां विकासयति, मनुष्यं च सच्चरित्रसम्पन्नमात्मगुणोपपन्नं सर्वभूतहिते रतं धार्मिकमापादयति। तथा—

अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम्॥
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वतः।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्॥

इति मनुना परिगणितेभ्यः कायिक-वाचिक-मानसेभ्यो दशविधेभ्यः पापेभ्यो निवर्तयति। अत एवोक्तं भगवता मनुना—

"न ह्यनध्यात्मवित्कश्चित् क्रियाफलमुपाश्नुते" इति।

अतो भारतीयस्यार्यजीवनस्याधारशिलाभूतमिदमात्मतत्त्वज्ञानमुपघ्नीकृत्यैव सर्वाणि विधिनिषेधशास्त्राणि प्रवर्तन्ते। वेदे ज्ञानकाण्डे सूक्ष्मरूपेण प्रतिपादितानां परब्रह्मादितत्त्वानां विषये श्रवणानुसारेण मननम्, अर्थात् युक्तिभिः साङ्गोपाङ्ग-विवेचनं कृत्वा निर्धारणं यया विद्यया साध्यते, सा विद्यान्वीक्षिकीति, आत्मविद्येति निगद्यते। यज्जन्य आत्मज्ञाननिर्णयः सर्वस्यापि कायिकवाचिक-मानसव्यापारस्य मूलतां भजते। इयमेव ब्रह्मविद्या, वेदान्तविद्या, परा-विद्या, अध्यात्मविद्या—इत्यादिभिर्नामभिर्व्यवह्रियते। इयं खलु सर्वासु विद्या-स्वभ्यर्हिता। अत एव भगवता गीयते—'अध्यात्मविद्या विद्यानाम्' इति। इयमेव सर्वासां विद्यानां मूलभित्तिः। अत एव श्रूयते मुण्डकोपनिषदि—

"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्" इति।

इत्थमान्वीक्षिकीविद्यया कृत्स्नपदार्थतत्त्वे यथावद् विज्ञाते सति तदनन्तरं तादृशं तत्त्वज्ञानमुपघ्नीकृत्यैव सदाचारशास्त्रम्, मानवनीतिशास्त्रम्, सामाजिक-शास्त्रम्, ऐहिकामुष्मिकफलपर्यवसायि त्रिवर्गशास्त्रम्, अपवर्गपर्यवसायि मोक्षशास्त्रं च प्रवर्तते। यदि किमपि शास्त्रं तत्त्वज्ञानमनुपघ्नीकृत्य प्रवर्तेत, तर्हि नैव फलाय कल्पेत। तच्छास्त्रमवलम्ब्य प्रवर्तमानः पुरुषः शुक्तिरजतज्ञानमवलम्ब्य प्रवर्तमान इव

निष्फलप्रवृत्तिरेव स्यात्। अत एव मीमांसामतेनापीदमात्मनो याथात्म्यं परिपोषयद्भिः श्रीमद्भिर्भट्टपादैरयं वेदान्तराद्धान्त उपश्लोक्यते—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ इति।

अपि च, सर्वा अपि विद्या आत्मज्ञानानुकूला जीवात्मनां कायिक-वाचिक-मानसाध्यात्मिकोन्नतीनां साधनभूताः। तासु च सर्वविद्याविचारहेतुत्वात् प्रधानतमेयमात्मविद्या। अत एव भगवता मनुनोपश्लोक्यते—

सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः॥ इति।

किञ्च, शास्त्रप्रतिपादिता मनुष्याणां प्रयत्नसाध्याः कायिक-वाचिक-मानसव्यापाररूपा धर्माश्च सर्वेऽप्यस्यां वेदान्तविद्यायामेवायतन्ते। यस्याश्च मूलं वैदिकं ब्रह्मकाण्डम्।

अनया विद्यया हि प्राधान्येन सन्देहविपर्ययशून्यमात्मयाथात्म्यविषयकं निश्चयात्मकं ज्ञानमुत्पाद्यते। तच्चात्मज्ञानमधिकारिभेदादनेकविधम्। तथा हि—'आत्मा देहेन्द्रियमनःप्राणबुद्धिभ्योऽन्यः कर्ता भोक्ता च' इत्येकमात्मज्ञानम्। इदं न्यायवैशेषिकमीमांसादर्शनैः साध्यते। आत्मा देहेन्द्रियमनःप्राणबुद्धिभ्यो भिन्नः, प्रकृतिप्राकृतविलक्षणः, ज्ञानेच्छाप्रयत्नसुखदुःखसंस्कारादिधर्मवदन्तःकरणविलक्षणत्वादकर्ता, अभोक्ता च सन्नपि, अन्तःकरणप्रतिफलनात् तत्तादात्म्याध्यासाद् वा कर्तृत्वेन भोक्तृत्वेन प्रतीयते, वस्तुतस्त्वात्मा कर्तृत्वभोक्तृत्वशून्य एवेति द्वितीयमात्मज्ञानम्। इदं हि साङ्ख्ययोगशाङ्करवेदान्तैः साध्यते।

तृतीयमात्मज्ञानं चेदमेव यत्—एवंभूतानां जीवात्मनां जडप्रपञ्चस्य च स्वरूपतः सङ्कल्पेन च धारको नियामकः शेषी विभुर्नित्यनिर्दोषो ज्ञानशक्त्यादिकल्याणगुणसम्पन्नः परब्रह्म परमात्मा भगवानित्यादिशब्दाभिधेय एकः परम आत्माऽस्ति, स च यथाकर्म फलप्रदः, अस्य चेतनाचेतनप्रपञ्चस्य स्वामी, धर्मग्लान्यधर्माभ्युत्थानादिप्रसङ्गेष्ववतारग्राही, सङ्कल्पेन जगद्व्यापारकर्ता चेति परमात्मविषयकं ज्ञानम्। इदं खलु पुराणैर्वैष्णववेदान्तैश्च साध्यते। एवमात्मज्ञानं त्रिविधं वर्तते।

अस्मिन्नात्मज्ञाने हि मनुष्यमात्रस्याधिकारः। अत एव श्रीमद्भागवते आत्मज्ञानं नरमात्रस्य साधारणधर्मेषु परिगणितम्। तथा हि—

सत्यं दया तपः शौचं तितिक्षेच्छा शमो दमः।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम्॥
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्॥
..............................................
नृणामयं परो धर्मः सर्वेषां समुदाहृतः॥ इति।

अत्रात्मविमर्शनमित्यस्य देहातिरिक्तात्मानुसन्धानमित्यर्थः। अत ईदृशात्मज्ञानशून्यो मनुष्यः पशुकल्पः। अत एव महर्षय आम्रेडयन्ति —

अधीत्य चतुरो वेदान् व्याकृत्याष्टादश स्मृतीः।
अहो श्रमस्य वैकल्यमात्मापि कलितो न चेत्॥ इत्यादि।

अत आत्मज्ञानमेव मानवताविकासस्य निदानभूतम्। एतस्यैव परमसत्यस्याविनाशिसुखस्यान्वेषणाय प्रवृत्ताः परमर्षयः—

परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च।
उपस्थाय प्रथमजामृतस्याऽऽत्मनाऽऽत्मानमभिसंविवेश॥

इत्येवं सर्वदोषविरहितां श्रुतिमवलम्ब्य कृततत्त्वसाक्षात्काराः शोकमोहमहोदधौ निमज्जमानान् सुखार्थिनो दुःखादुद्धृत्य तदक्षय्यसुखे संयोजयितुं षड्दर्शनान्याविष्कृतवन्तः।

तत्र यथा बाह्यजगति लोकः सर्वोऽपि दृढविश्वासो वर्तते, तथैवेदृशे आत्मन्यपि विषये निश्चयात्मकेन ज्ञानेन सर्वोऽपि मनुष्यो गाढान्वितो यथा स्याद्, ईदृशेनात्मज्ञानेनापायेभ्यः पापेभ्यो विरमन्, ऐहिकेष्वामुष्मिकेषु च प्रियहितसाधनेषु निर्विशङ्कं प्रवर्तमानः सर्वभूतहिते रतश्च यथा स्यादेतदर्थमियं वेदान्तविद्याविर्भूता।

अनया विद्यया—कोऽहम्? किमहं देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणो न वा? किमहं नित्यः, अनित्यो वा? किमहं सच्चिज्ज्ञानानन्दस्वरूपः, जडस्वरूपो वा? किमहमणुर्विभुर्वा? किमिदं जगत्? इदं च किं सत्यं मिथ्या वा? इदं जगदुत्पन्नं न वा? इदं प्रलयमेष्यति न वा? किमस्य जगतः कश्चित् कर्तास्ति न

वा ? यदि स्यात्, तर्हि तेन सह जगतः जीवानां च कः सम्बन्धः ? जीवस्यायं संसारः कुत आयातः ? साधकेन संसारे स्थितिकाले किं स्वधर्मा अनुष्ठेया न वा ? सर्वोच्चामपवर्गरूपामाध्यात्मिकीमुन्नतिपदवीमुपेयुषः पुरुषस्य तत आवृत्तिर्भवति न वा ? इत्येवमादीनां प्रश्नानामुत्तरकोटौ निर्धार्यमाणानां सत्यानामर्थानामसंभावनाविपरीतभावनापनोदनपूर्वकं युक्तिभिरिदमित्थमेवेति ज्ञानं हृदि दृढं प्रतिष्ठाप्यते।

इदं हि वेदान्तदर्शनं सांख्ययोगवर्णितमात्मस्वरूपमभ्युपगम्य प्रवर्तमानं ताभ्यां दर्शनाभ्यामवर्णितमात्मतत्त्वस्य ब्रह्मात्मकत्वं विशिष्य प्रतिपादयति। तत्र च मूलम्—"सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः, सत्प्रतिष्ठाः", "ऐतदात्म्यमिदं सर्वम्", "तत्सत्यम्", "स आत्मा", "तत्त्वमसि श्वेतकेतो" इत्यादिका श्रुतिः।
"सर्वं खल्विदं ब्रह्म" इत्युक्तरीत्या चेतनाचेतनप्रपञ्चस्य ब्रह्मात्मकत्वेऽध्यवसिते—

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥
सर्वभूतात्मके तात जगन्नाथे जनार्दने।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः॥
आत्मानं चेद् विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥

इत्युक्तरीत्या भेददृष्टिनिबन्धनः कामक्रोधादिहेतुकः सर्वोऽपि सांसारिकोऽनर्थो विलयमुपैति। सर्वत्र ब्रह्मात्मकत्वदर्शनवतां सर्वं ब्रह्मेवात्यन्तमनुकूलं परिस्फुरति, किमपि प्रतिकूलतया न परिस्फुरति। देहात्माभिमानवतामेव पुरुषाणां देहाद्यनुकूलमनुकूलतया, देहप्रतिकूलं च प्रतिकूलतया भातीति प्रियाप्रिययोगोऽवर्जनीयः। ब्रह्मात्माभिमानवतां तु ब्रह्मात्मकत्वेन विदितं सर्वमत्यन्तमनुकूलतयैव भातीति निरतिशय आनन्द एवोपनमति, यस्मान्न पुनरावृत्तिः। अत एव भगवानप्येनमात्मज्ञानं संस्तौति—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥ इति।

तदेवं वेदान्तसिद्धान्तसिद्धं ब्रह्मात्मदर्शनं परमाय श्रेयसे कल्पते। इदं च ब्रह्मात्मदर्शनरूपमद्वैततत्त्वं भावनात्रयेण सुदृढीभवति। तच्च भावनात्रयम्—भावाद्वैतम्, क्रियाद्वैतम्, द्रव्याद्वैतञ्चेति। तदुक्तं श्रीमद्भागवते श्रीशुकाचार्यैः—

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथैव च।
वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः॥ इति।

अर्थाद् भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं चात्मतत्त्वानुभवेन यो जानाति, स जाग्रदादीन् त्रीन् स्वप्नान् निवर्तयति।

तत्र पटतन्तुवत् कार्यकारणवस्त्वैक्यस्य दर्शनं भावाद्वैतम्; परे ब्रह्मणि सर्वकर्मार्पणं क्रियाद्वैतम्; स्वस्य जायापुत्रादिसर्वप्राणिनां च यदभेदावलोकनम् (अर्थाद् देहादीनां पञ्चभूतात्मकत्वेन भोक्तुश्च परमात्मत्वेनाभेद इति दर्शनम्), तद् द्रव्याद्वैतम्। तदुक्तम्—

कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत्।
अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तदुच्यते॥
यद् ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम्।
मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते॥
आत्मजायासुतादीनामन्येषां सर्वदेहिनाम्।
यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते॥ इति।

इदमध्यात्मज्ञानं राष्ट्रसंरक्षणेऽपि शासकानां सुबहूपकुरुते। यतो हि शासनाधिकारिषु जितेन्द्रियतायाः सम्पादने इयमध्यात्मविद्यैव हेतुः। मनसो वशवर्तित्वे हि सर्वं जगद् वशवर्ति भवति। अत एवोक्तं श्रीमद्भागवते—

यस्यात्मानुवशश्चेत् स्यात् सर्वे तद्वशगा इमे।
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः॥ इति।

अर्थाद् यस्य जितेन्द्रियतया मनोऽधीनं स्यात्, तस्यैव दारसुतादयो वशवर्तिनो भवन्ति। सपाला लोकाश्च अतन्द्रिता जागरूकाः सन्तस्तस्मै बलिं यच्छन्ति। अर्थाद् मनसः स्ववशवर्तित्वे भृत्यादयोऽपि स्ववशा भवन्ति, अन्यथा शासकस्य क्रोधलोभादिना विमनीकृता भृत्या उक्तकारिणो न भवन्ति। अतो हि मनसोऽनुशासनमेव सर्वोत्तमं शासनम्।

इदं सर्वमभिप्रेत्यैव चतुर्विद्यापारदृश्वना महर्षिणा कौटल्येन आन्वीक्षिकी-विद्यानिरूपणावसरे—"सांख्यं योगो लोकायतं च" इति तद्विभागं कृत्वा, इदं त्रितयं राज्ञाऽवश्यं वेदितव्यमित्युक्तम्। तत्र सांख्यं प्रकृतिपुरुषविवेकप्रधाना विद्या, तया ह्यात्मानात्मतत्त्वज्ञानं साधितं भवति। सांख्येन परोक्षज्ञानमेव तत्त्वविषये साधितं भवति। अतस्तदनु तत्त्वसाक्षात्कारार्थं योगविद्या प्रवृत्ता। यया विधया साधनानुष्ठाने कृते सति आत्मतत्त्वं यथावत् साक्षात्कृतं भवति, सा विधा योगविद्यया प्रतिपाद्यते। तथा चात्मयाथात्म्यविषये परोक्षापरोक्षज्ञानसाधने सांख्ययोगविद्ये भवतः। अतः सांख्ययोगोक्त-प्रकृतिपुरुषतत्त्वज्ञो राजा शासको वा सत्त्वमेवावलम्बितुमुद्युञ्जीत, रजसा तमसा च नाभिभूयते। अत एवोक्तं सोमदेवसूरिणा नीतिवाक्यामृते—

"प्रकृतिपुरुषतत्त्वज्ञो हि राजा सत्त्वबलमवलम्बते। रजःफलं चाफलं च परिहरति; तमोभिर्नाभिभूयते। उत्सहते च विद्यावृद्धसेवायाम्" इति। अत एव—"एवं परम्पराप्राप्तमिमं राजर्षयो विदुः" इति स्वयं भगवताऽपि गीतासु गीतम्।

आत्मानात्मतत्त्वज्ञो हि राजा अभिवृद्धसत्त्वगुणः सुदुष्परिस्थितावपि न व्यथते, आरब्धं च कर्म आन्तं निर्वहति। झञ्झावातेन महान् गिरिरिव स सांसारिकैर्दुःखैर्नाभिभूयते। तदुक्तं महाभारते—

विषमावस्थिते दैवे पौरुषेऽफलतां गते।
विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः॥ इति।

तदेवं वेदान्तविद्योदितोऽयमद्वैतसिद्धान्तः—

एकः शुद्धः स्वयञ्ज्योतिर्निर्गुणोऽसौ गुणाश्रयः।
सर्वगोऽनावृतः साक्षी निरात्माऽऽत्माऽऽत्मनः परः॥

इत्यादिप्रकारेण सर्वव्यापकं गूढं तदात्मतत्त्वं यथार्थं निरूप्य, सर्वप्राणिषु एकात्मभावनामुद्भाव्य, सर्वत्र बन्धुभावं द्रढयति। इत्थमियमद्वैतभावना राष्ट्रोन्नतौ राजनीतावप्यतीव लाभप्रयोजिका। एकात्मभावनायाः प्राबल्येनैव—'कः कमनुपकुर्यात्, केन को विवदेत्, कं प्रति कस्य क्रूरता, किमर्थं कस्य कृते स्वार्थसिद्धिः, किमर्थं च पापाचारो भ्रष्टाचारश्च' इत्यादिसद्विवेकोदयेनानेके सहजा दोषनिवहाः स्वयमेवोन्मूलिता भवन्ति।

अनयैव भावनया आचारपूताः सन्तः कियन्तो महापुरुषा लोके आदर्शतां व्रजन्ति। येषामत्युज्ज्वलैश्चरित्रैः सर्वोऽपि मानवसमाजः प्रभावितः सन् तथैवाचरति। इत्थं जनतासु सद्विवेक-सुरुचि-सत्प्रवृत्ति-प्रादुर्भावैः सर्वोऽपि लोकोऽपाकृतदोषः, आदृतसद्वृत्तः, परस्परमन्योन्यं सुखाय श्रेयसे च प्रयतते। सुदृढयाऽद्वैतभावनया सुसंस्कृते राष्ट्रे, प्रबुद्धे ब्राह्मणवर्गे, स्वकर्मनिरते च राजन्यवर्गे, बन्धुत्वभावावर्जिते च वैश्यवर्गे, उच्चावचभावविरहितस्वाङ्गपरिपोषके चान्तिमवर्गे, सर्वत्र कदाचारलेशविवर्जिते देशे शासकैर्निर्विशङ्कमुद्घुष्यते—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नायज्वा न स्वैरी स्वैरिणी कुतः॥ इति।

अनयैव सर्वोच्चभावनया वेदान्तशास्त्रम्—"इदं सर्वं जगद् ब्रह्मात्मकम्" इति सयुक्तिकं प्रतिपादयद् विवेकिनां चेतःस्वेकात्मभावनां पोषयति। आत्मज्ञानस्य दौर्बल्येनैव सर्वत्रैकात्मभावनाया न्यूनतया चेतसि रागद्वेषादयो दोषाः प्रादुर्भवन्ति, तथा—"अयं निजः परो वा" इति भेदभावनया च वर्द्धन्ते, आत्मज्ञानोदयेन प्राणिष्वेकात्मभावनया च विलीयन्ते। आत्मयाथात्म्यज्ञानेनैकात्मभावनोदयेन च—"वसुधैव कुटुम्बकम्" इति सर्वत्र बन्धुत्वभावना स्वात्मत्वभावना च सकलचराचरजगत्सु समानरूपतया समुदेति। तदेवं वेदान्तविद्योक्तोऽद्वैतसिद्धान्तः सिद्धौषधमिव सर्वदोषनिवारणपूर्वकं सर्वत्र भौतिकशान्तिस्थापनपुरःसरं राष्ट्रोन्नतौ सर्वोपायेषु सर्वातिशायीति शिवम्॥



# मायाया विलसितम्

श्रीरघुनाथशर्मा वेदान्तविभागाध्यक्षचरः, वा० सं० वि० वि०, वाराणसी।

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै विद्यात्मने नमः।
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥

इति पद्यद्वयं यथायथं श्रुतिस्मृत्योः श्रूयते स्मर्यते च। अत्र चाद्ये पद्ये प्रकृति-पुरुषयोर्बोधाबोधरूपयोर्नामतः स्वरूपतश्च निर्देशः। तत्र मायामिति नामतो निर्देशः। मीयते = निर्मीयते जगद् यया सा माया। यद्वा मीयते = ज्ञायते आत्मन्यध्यस्तं जगद् यया सा माया। माङ्धातोर्ज्ञानसामान्यमर्थः। प्रपूर्वकस्य तु प्रकृष्टं ज्ञानम्। ज्ञाने प्रकर्षश्चाबाधिताननुभूतार्थविषयकत्वरूपः। मायायाश्चात्मशक्तिरूपायास्तत्त्वा-न्यत्वाभ्यां सत्त्वासत्त्वाभ्याञ्चानिर्वाच्याया द्वे शक्ती—विक्षेपशक्तिरावरणशक्तिश्च। तत्र तस्या विक्षेपशक्तिमाश्रित्य प्रथमा व्युत्पत्तिः, आवरणशक्तिमाश्रित्य तु द्वितीया। माययाऽऽवृते ह्यात्मतत्त्वे सैव विक्षेपशक्त्या जगत्सृजति। यथाऽज्ञाते रज्जुस्वरूपे सर्पधारादिसृष्टिः, ज्ञाते च तन्निवृत्तिः। तदेतदुच्यते—"ज्ञाते कार्यं न विद्यते" इति। अविद्यामिति मायायाः स्वरूपनिर्देशः, विद्याविरोधित्वञ्च मायायाः स्वभावः। स च श्रूयते—"तम आसीत् तमसा गूढमग्रे" इत्यादिश्रुतिषु। अत्र चावरणसाम्यात्तमो-रूपत्वमुक्तम्। तस्याविद्याविरोधित्वञ्च चित्सुखमुनिनाऽप्युक्तम्—

अनादिभावरूपं यद् विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते॥ इति।

'विद्यात्मने' इति च पुरुषस्य नामस्वरूपयोर्निर्देषः। तत्रात्मेति नामनिर्देशः। तद्व्युत्पत्तिश्च दर्शिता—

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तत आत्मेति गीयते॥ इति।

विद्यारूपत्वञ्च तस्य स्वभावः। सा चात्मस्वरूपभूता ज्ञानरूपाविद्या नित्या, "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। 'तरति' इत्यस्य 'प्लवते' इत्यर्थः। अविद्यायाः पारं गच्छतीति तदर्थः, 'तॄ' प्लवनतरणयोरिति धात्वर्थनिर्देशात्। द्वितीयपद्ये च दैवी=देवस्य=स्वप्रकाशचिदात्मन इयं शक्तिः, गुणमयी=सत्त्वरजस्तमोगुणात्मिका, मम भगवतः परमेश्वरस्य शक्तिभूता माया दुरत्यया। आत्मसाक्षात्कारं विनाऽनुच्छेद्या। 'मामेव ये प्रपद्यन्ते'—अत्र प्रपत्तिः स्वाभिन्नत्वेन भगवतः साक्षात्काररूपा, तस्या एव मायातरणसिद्धौ सामर्थ्यात्। तत्र माया शुद्धसत्त्वप्रधाना ईश्वरस्य शक्तिः, यया जगत्सृजति, अवति, संहरति यथाकालम्। अविद्या तु मलिनसत्त्वप्रधाना जीवस्य शक्तिः, यया स्वप्ने जाग्रति च मनोमयं जगत् सृजत्यध्यस्यति च। तथा चाध्यासो नामाविद्यायाः कार्यविशेषो भ्रान्तिज्ञानरूपः, अध्यसनमध्यास इति भावे घञोऽभ्युपगमात्। अधिकस्य अतिरिक्तस्य धर्मस्य सर्पत्वादे रज्जुरूपेऽधिष्ठानेऽसनं प्रक्षेपणमारोप इति यावत्। अध्यस्यत इत्यध्यास इति कर्मणि घञोऽभ्युपगमे तु रज्जावध्यस्यमानं सर्पत्वादिकमध्यासः। तत्राध्यासो नाम अतस्मिंस्तद्बुद्धिः। सा च तत्तद्वादिभिस्तेन तेन रूपेणाभ्युपेयते। तदुक्तम्—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्॥ इति।

तत्रात्मख्यातिर्विज्ञानवादिनाम्; असत्ख्यातिर्माध्यमिकानाम्; अख्यातिः प्राभाकराणाम्; अन्यथाख्यातिर्गौतमीयानाम्; अनिर्वचनीयख्यातिरद्वैतिनाम्। अत्र सर्वेष्वपि नयेष्वन्यस्यान्यावभासरूपाऽनृतताऽव्याहतैव। एष चातस्मिंस्तद्धर्माध्यारोपरूपोऽध्यासो द्विविधः—आहार्योऽनाहार्यश्चेति। तत्राद्यो बाधबुद्धौ सत्यामपि जायते, द्वितीयस्तु बाधबुद्ध्यभावे सत्येव। तत्राद्यः—चन्द्रो मुखमिति; द्वितीयस्तु रज्जौ सर्पावबोधरूपः, देहादौ चात्मविभ्रमरूपः। तत्राद्यो द्विविधः—संपद्रूप उपासनारूपश्च। तत्रालम्बनमविद्यमानसमं कृत्वा याऽतस्मिंस्तद्बुद्धिः साऽऽद्या, द्वितीया त्वालम्बनप्रतीतौ सत्यामेव जायमाना। तत्र शालग्रामशिलायाम्—'एष शालग्रामः' इति बुद्धिराद्या; द्वितीया तु—'इयं शिला शालग्राम' इति। एष च द्विविधोऽपि संपदुपासनाभेदभिन्नोऽध्यास आलम्बने मनआदित्यादौ ब्रह्माभिन्नस्वाभेदबुद्ध्या क्रियमाण उन्मूलयति बहुविधानि दुःखानि, उपचिनोति च नानाविधानि

सुखान्यैश्वर्यसंपादनद्वारेत्युपनिषत्स्वाद्दतः। एष च द्विविधोऽपि बाधबुद्धौ सत्यामेव जायमानो नित्यनिवृत्त एवेति न तदुच्छेदाय प्रयत्नः क्रियते शास्त्रे तदपायविध्युपदेशरूपः। देहादावात्मविभ्रमस्तु नैसर्गिकोऽनादिरनन्तो बहुविधदुःखहेतुर्दुरुच्छेद इति। आत्यन्तिकतन्निवृत्तये आत्मविद्यावाप्तये च बहुविधा उपायाः शास्त्रेषु प्रदर्शिताः स्वस्वकृतान्तमाश्रित्य। तत्र मनआदित्यादौ संपदुपासनाभ्यां जाताऽद्वैतवासनाऽल्पभयकृतत्राणा, परिच्छिन्नालम्बनविषयकत्वात्; अद्वितीये निर्विशेषे ब्रह्मणि तु सा महाभयकृतत्राणा, दिक्कालाद्यनवच्छिन्नानन्तब्रह्मविषयकत्वात्। तदुक्तं श्रीहर्षमिश्रैः—

ईश्वरानुग्रहादेषा पुंसामद्वैतभावना।
महाभयकृतत्राणा द्वित्राणां यदि जायते॥ इति।

तदुक्तं छान्दोग्योपनिषद्भाष्ये श्रीशङ्करभगवत्पादैः—"न चाद्वैतात्मविज्ञानादन्यत्रात्यन्तिकी निःश्रेयसप्राप्तिः, तथा द्वैतविषयानृताभिसंधस्य बन्धनं तस्करस्येव तप्तपरशुग्रहणे बन्धदाहभावः संसारःदुखप्राप्तिश्चेत्युक्त्वाऽद्वैतात्मसत्याभिसंघस्यातस्करस्येव तप्तपरशुग्रहणे बन्धदाहाभावः संसारःदुखनिवृत्तिर्मोक्षश्चेति। तत्रैतस्मिन्नद्वैतविद्याप्रकरणेऽभ्युदयसाधनान्युपासनान्युच्यन्ते, कैवल्यसन्निकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि, "मनोमयः प्राणशरीरः" इत्यादीनि कर्मसमृद्धिफलानि च कर्माङ्गसंबन्धीनि। रहस्यसामान्यान्मनोवृत्तिसामान्याच्च यथाऽद्वैतविज्ञानं मनोवृत्तिमात्रम् तथाऽन्यान्यप्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यम्। एवमप्यस्ति खल्वद्वैतज्ञानस्योपासनानाञ्च विशेषः। स्वाभाविकस्यात्मन्यविक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानम्। रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः। उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसंतानकरणं तद्विलक्षणप्रत्ययानन्तरितमिति विशेषः। तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाण्यालम्घनविषयकत्वात् सुसाधानि चेति पूर्वमुपन्यस्यन्ते। तत्र कर्माभ्यासस्य दृढीकृतत्वात् कर्मपरित्यागेनोपासन एव दुःखं चेतःसमर्पणं कर्तुमिति कर्माङ्गविषयमेव तावदादावुपासनमुपन्यस्यते—"ओमित्येतदक्षरमुद्गीथमुपासीत" इति। कर्माङ्गावयवभूते ओङ्कारे परमात्मप्रतीके दृढामैकाग्र्य-

लक्षणां मतिं संतनुयात्। अत्र चेति परत्वादोङ्कारस्य स्वरूपमात्रमुपास्यत्वेन विवक्षितम्। तत्र चोङ्कारे रसतमत्वरूपो गुणश्चिन्त्यः। तस्य रसतमत्वं चोक्तं छान्दोग्ये—"एषां भूतानां पृथिवीरसः, पृथिव्या आपो रसः, अपामोषधयो रसः, ओषधीनां पुरुषो रसः, पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः। स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" इति। अत्र उद्गीथशब्देन ओङ्कारोऽभिप्रेतः। सर्वकामावाप्तिगुणविशिष्टं वाक्प्राणाख्यमृक्सामात्मकं मिथुनमोङ्कारे संसृष्टमित्योङ्कारस्य सर्वकामावाप्तिगुणवत्त्वं प्रसिद्धमिति तदुपासकोऽप्युद्गाता तद्धर्मा भवति। तदुक्तं छान्दोग्ये—"आपयिता ह वै कामानां भवति। य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते" इति। समृद्धिगुणवाँश्चोङ्कारस्तत्रैवोक्तः। तच्च विस्तरभयाद् नात्रोच्यते, तत एव द्रष्टव्यम्। इतीदं कर्माङ्गसंबन्धिन उपासनस्य दिङ्मात्रं दर्शितम्।

अथाभ्युदयफलानामुपासनानां दिङ्मात्रं निदर्श्यते। तत्र पुत्रदीर्घायुष्ट्वफला विराट्कोशोपासना छान्दोग्ये श्रूयते—

"अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् विश्वमिदं श्रितम्॥ १॥

तस्य प्राची दिग् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम्॥ २॥

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना॥ ३॥

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि॥ ४॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम्॥ ५॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम्॥ ६॥

अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम्॥ ७॥

एषां च मन्त्राणां पूर्णं व्याख्यानं शाङ्करभाष्यादानन्दगिरीयतश्च विज्ञेयम्, इह तु विस्तरभयान्न प्रदर्श्यते। केषाञ्चिद् दुरूहपदानां व्याख्यानं तु क्रियते। अत्र प्रथमे मन्त्रे त्रैलोक्यात्मनि कोशदृष्टिरुक्ता। लोके च कोशशब्देन हिरण्यादिनिक्षेपाधारा मञ्जूषोच्यते। त्रैलोक्यात्मनि चानेकधर्मसादृश्यात् कोशत्वारोपः। तत्रानेकधर्मसादृश्यञ्च श्रुत्या स्वयमेवोक्तम्—"भूमिबुध्नो न जीर्यति" इत्यादिना। भूमिर्बुध्नो वर्तुलं भूलम्बस्य स तथाभूतः। न जीर्यति=न विनश्यति। त्रैलोक्यात्मनः सहस्रयुगकालावस्थायित्वादापेक्षिकमविनाशित्वम्। तदेवं त्रैलोक्यात्मनि कोशदृष्टिस्तत्रापि भूमौ बुध्नदृष्टिरित्युक्तम्। स्रक्तिपदेन कोणा अत्राभिप्रेताः। तथा च दिक्षु कोशकोणदृष्टिः कर्तव्येत्युक्तं भवति। द्युलोके च कोशस्योर्ध्वबिलत्वबुद्धिः कर्तव्या। अन्तरिक्षे च कोशस्योदरत्वदृष्टिः कार्या, साम्यात्। वसुधानः=वसु धीयतेऽस्मिन् कर्मफलाख्यमतो वसुधानः। तस्मिन्नन्तर्विश्वं समस्तं प्राणिकर्मफलं सह तत्साधनैरिदं यद् गृह्यते प्रत्यक्षादिप्रमाणैस्तच्छ्रितं स्थितमिति। दीर्घायुष्ट्वं पुत्रस्य कामयमानस्त्रैलोक्यात्मानं कोशाकारं परिकल्प्य तस्य चतस्रो दिशस्तत्तन्नामवतीर्द्वितीयमन्त्रोक्तास्तासां स्त्रीत्वं तत्संबन्धेन वायुं तद्वत्समरणधर्माणं चिन्तयेदिति प्रधानमुपासनमुक्तम्। तदङ्गभूतो जपश्च दर्शितः 'अरिष्टं कोशं प्रपद्ये' इत्यादिना तृतीयेन मन्त्रेण। 'अमुनाऽमुनाऽमुना' इति त्रिर्नाम पुत्रस्य गृह्णीयात्। हेतावेषा तृतीया। तेन पुत्रेण निमित्तीभूतेनेत्यर्थः। तद्दीर्घायुष्ट्वं निमित्तीकृत्येति यावत्। सर्वेषु मन्त्रेषु 'प्रपद्ये' इति क्रियापदमुपायं प्रदर्शयितुं पुनः पुनरुपात्तम्। 'अमुनाऽमुनाऽमुना' इत्यस्य च पुनः पुनरुपादानं निमित्तनिवेदनार्थम्। आदिमेन मन्त्रद्वयेन—"अजरं कोशं सदिग्वत्सं यथावद् ध्यात्वा अरिष्टं कोशं प्रपद्ये" इत्यादिकान् ३-४-५-६-७ इत्येतान् मन्त्रान् जपेत्। पुरश्चरणसंख्या च मन्त्राक्षरसंख्यया शतानि सहस्राणि च। इदानीं तु कलौ युगे चतुर्गुणा स्म। तथा च शिष्टाः स्मरन्ति—"कलौ संख्या चतुर्गुणा" इति। इतीदमभ्युदयफलस्योपासनस्य दिङ्मात्रं निदर्शितम्। सन्ति च बहून्यन्यान्यभ्युदयफलान्युपासनान्युपनिषत्सु तानि तास्वेव द्रष्टव्यानि जिज्ञासुभिः, येषां प्रभावात् पुरा ब्राह्मणानामप्रतिहतशक्तिकं श्रद्धेयं ब्राह्मण्यमासीत्, यदद्यापि कराले कलौ पूज्यते।

अथ क्रममुक्तिफलानामुपासनानां दिङ्मात्रं निदर्श्यते श्रद्धासंजननाय। छान्दोग्ये श्रूयते—"मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभय-

मादिष्टं भवत्यध्यात्मञ्चाधिदैवतञ्च" इति। व्याख्यातञ्चैतद् भाष्ये—मनो मनुतेऽनेनेत्यन्तःकरणं तद् ब्रह्मपरमित्युपासीतेति। एतदात्मविषयं दर्शनमध्यात्मम्। अथाधिदैवतमग्निवाय्वादित्यदिग्रूपदेवताविषयमिदमुपासनम्, आकाशो ब्रह्मेत्युपासीतेति। एवमुभयमध्यात्ममधिदैवतञ्चोभयं ब्रह्मदृष्टिविषयमादिष्टमुपदिष्टं भवति। आकाशमनसोः सूक्ष्मत्वात्, ब्रह्मणो मनसोपलभ्यत्वाच्च ब्रह्मदृष्टेर्योग्यं मनः। आकाशश्च सर्वगतत्वात् सूक्ष्मत्वादुपाधिहीनत्वाच्चेति। एवमध्यात्ममधिदैवतञ्च विहितस्योपासनस्याङ्गभूतमनुचिन्तनं दर्शितं तत्रैव—"तदेतच्चतुष्पाद् ब्रह्मवाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मञ्चाधिदैवतञ्च ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥ इति।

एवमध्यात्ममधिदैवतञ्च चतुष्पाद् ब्रह्मोपास्यत्वेन निर्दिष्टम्। तत्र यथा गवादिकं प्राणिजातं पादेनैव गन्तव्यं देशं प्राप्नोति, तथा—देवदत्तोऽपि वाचैव पादेन वक्तव्यं विषयं प्रतिलभते, तेन तस्यायुक्तं पादत्वम्। तथा घ्राणरूपः प्राणोऽपि ब्रह्मणश्चतुर्थः पादः। चक्षुरपि ब्रह्मणश्चतुर्थः पादः। एवं श्रोत्रमपि ब्रह्मणश्चतुर्थः पादः। यथा गोरुदरे पादा लग्ना लक्ष्यन्ते तथाऽऽकाशस्योदर इवाग्निवाय्वादित्यदिशो लग्ना दृश्यन्ते। आध्यात्मिकपादानां वागादीनामाधिदैविकपादैरग्न्यादिभिरधिष्ठेयतया संबन्धोऽनुचिन्तनीय इत्यपि दर्शितम्। विद्याफलञ्च सर्वत्र समानं कीर्त्यादिरूपम्। अदृष्टञ्च ब्रह्मसंपत्तिरूपं फलं क्रमिकमित्यवधेयम्। तथा चाध्यात्मं मनोरूपं ब्रह्म वागादिभिश्चतुष्पात्। अधिदैवतञ्चाकाशरूपं ब्रह्माग्निवाय्वादित्यदिग्भिश्चतुष्पात्। अध्यात्मञ्च

मनोरूपं ब्रह्माधिदैविकेनाकाशरूपेण ब्रह्मणा चतुष्पदाऽधिष्ठितमित्युपासनप्रकारोऽत्र दर्शितः। तदेतत् क्रममुक्तिफलानामुपासनानां दिङ्मात्रमिह दर्शितम्।

पुरुषदीर्घायुष्ट्वफला च विद्या उपासनारूपा आङ्गिरसेन घोरनाम्ना महर्षिणा देवकीपुत्राय कृष्णाय शिष्यायोक्ताऽत्र छान्दोग्ये निर्दिष्टा, यामवाप्य श्रीकृष्णोऽपि प्राज्ञ एवान्यासु विद्यासु बभूव। सैषा विद्याऽवश्यमेवाभ्यासेन समुपार्जनीया विद्वद्भिरिति विदुषः संप्रार्थ्य उदयनोक्तिरनुस्मार्यते—

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतो मायेति यस्योदिता।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम॥



# अध्यासनिरूपणम्

श्रीकेदारनाथओझा, राजकीयसंस्कृतमहाविद्यालयः, पाटलिपुत्रम् ।

प्रकाशमात्रं परिणामशून्यं सर्वस्वरूपं गुणवर्जितञ्च ।
जगत्सु चक्षुस्तमसः प्रकाशं विकाशमायान्तमहं नमामि ॥

## चैतन्येऽध्यस्तत्वमन्तरा न विषयाणां प्रकाशः

जडप्रकाशात्मकं सर्वं जगत्, जडप्रकाशयोश्च स्वाभाविकोऽनादिः परस्पराध्यासः, अयमेव शारीरकभाष्यारम्भे श्रीशङ्कराचार्यभगवता विषयविषयिणोरध्यास इति वर्णितः । अत एव 'कीदृशं ज्ञानम् ?' 'को ज्ञातः ?' इति प्रश्नयोः समानमेव 'घटः' इत्युत्तरम् , प्रथमः प्र नो ानाकारस्य द्वितीयश्च विषयाकारस्य । परं विविच्य दर्शयितुमशक्यत्वात् तदुत्तरमेकाकारकमेव, विषयविषयिणोरभेदमेवाभिमन्यमाना योगाचार्याः सर्वमतसिद्धत्वेन सहोपलम्भनियमं हेतुं व्याचख्युः, सहोपलम्भस्वीकारेऽपि परस्परं पृथग्विविच्य दर्शयितुमशक्यत्वमेव कारणम् ।

## विज्ञानवादिमतेऽध्यासः

(१) विज्ञानवादिमते विज्ञानवैचित्र्यसम्पादक आकारो विज्ञानस्यैवेति, न विज्ञानातिरिक्तो विषयः, तेन दृढोऽस्य विषयविषयितादात्म्याध्यासः । यद्यपि बौद्धमते सांख्यानां बुद्धिरिव किमपि चित्ततत्त्वमस्ति, तत्रैव वासनात्मना विषया वर्तन्ते विज्ञानात्मना च प्रकाशन्त इति क्वाचित्कलेखेन प्रतिभाति, तथापि विज्ञानविशेषादिकमेव चित्तादिशब्देन व्यपदिश्यते, स्वप्रकाशं विज्ञानमेव स्वात्मविषयप्रकाशस्वरूपमित्येव प्रसिद्धः सिद्धान्तः । उत्तरज्ञानं प्रति कारणीभूतं पूर्वज्ञानमेव मन इति केचन अभिधर्मानुयायिनो लिखन्ति ।

न्यायनये शुक्तावन्यत्र प्रसिद्धस्य रजतस्य यथाऽध्यासो न तथा विज्ञानवादे, किन्तु स्वस्वकारणाधीनं पूर्वविज्ञानादिकमेव कारणं तत्तदाकाराकारितं तदुत्तरविज्ञानं जनयति, न तु शुक्तिरिव विज्ञानं स्थिरम् , यत्र विषयाकारस्याध्यासः स्यात् । आरोप्यमाणस्य रजतादेः सत्ता यथा न्यायनयेऽपेक्षिता न तथा विज्ञानवादे वेदान्ते च; उभय-

मते वासनाया एवापेक्षितत्वात्। वेदान्ते शुद्धबुद्धमुक्तस्वभावं नित्यविज्ञानमधिष्ठानम्, विज्ञानवादे च तादृशं क्षणिकं विज्ञानमिति विशेषः।

ननु परत्र परस्यावभासोऽध्यासः, विज्ञानतदाकारयोः क्वचिदपि पृथगनुपलम्भात्तयोः परत्वस्यासंभवात् कथमध्यासः ? यथा विज्ञानं सत्तथा तदभिन्नस्तदाकारोऽपि सन्, उभयोः सत्त्वादिति चेत्, वेदान्तदृशाऽध्यासस्य जागरूकत्वात्, असङ्गे निष्कलङ्के प्रकाशस्वभावेऽपि विज्ञाने कस्यचिद् वस्तुत आकारस्यासंभवात्।

अथवा निरुपप्लवा चित्सन्ततिर्मोक्ष इति विज्ञानसद्वादिनो वदेयुः, चित्सन्ततेर्विराम इति तु शून्यवादस्यैव शोभेत, न च स्वभावभूतस्य सत आकारस्य प्रच्युतिः संभवति, येन निरुपप्लवता उपपद्येत। साकाराणि विज्ञानानि विरतानि, मुक्तौ प्रवहतां विज्ञानानां नाकारः स्वभाव इति चेदायातं वेदान्तविज्ञानस्येव बौद्धविज्ञानस्य निराकारस्वभावतया, कादाचित्क आकारावभासस्त्वध्यासमाश्रयते।

वेदान्ते समेषामधिष्ठानतया उपादानं विज्ञानमेव, उत्पद्यमानमध्यस्तमेवोत्पद्यते, अन्यत्र तस्य सत्त्वानिरूपणात्, अधिष्ठानस्य आवृततया वृत्त्या आवरणक्षये प्रकाशते, विज्ञानवादे विज्ञानात्मक एव आकारो विज्ञानमेव प्रकाशः, विज्ञानादन्यत्र आकारस्य सत्ता नास्ति, अत आकार उत्पद्यमान एव प्रकाशते, वेदान्तस्य दृष्टिसृष्टिवादे तु सममेव, एकद्विक्षणवैलक्षण्यस्यानुभवविहीनस्याकिञ्चित्करत्वात्।

विदेशीयदर्शनेऽध्यासः

( २ ) विदेशीयवर्कलेजार्जस्य दर्शनमपि विज्ञानवादमनुहरति, ज्ञातैकसत्त्वं समेषामङ्गीकरोति, अज्ञेयस्य वस्तुत्वमेव न मनुते, एतच्च प्रकाशमानत्वं सत्त्वं प्रकाशस्वरूपविज्ञानात्मत्व एव वस्तुनः स्यात्, अत एव सर्वं मानसं मन्यते; यथा बौद्धं तथा मानसमिति व्यवहारः। बौद्धं विज्ञानात्मकं मानसमपि विज्ञानात्मकम्, प्राचां विदेशीयानामध्यात्मं मनोमात्रं गतिः। अष्टादशशताब्द्यनन्तरन्तु भारतीयदर्शनसम्पर्कवशात् कतिपये नित्यात्मन्यपि विश्वासभाजोऽभिनवाः संजाताः। बाह्यस्याङ्गीकारेऽप्यान्तरेण प्रकाशेन बाह्यस्य सम्बन्धो न संभवतीति मानसमेव वस्त्वङ्गीकर्तव्यम्। एषा युक्तिस्तु तस्य विज्ञानवादेऽद्वैतदर्शने च प्रधानतामाश्रयते, भाषाया उपपादनशैल्याश्च भेदेऽपि दृष्टिरेकैव, विज्ञानमात्रस्य प्रकाशत्वाद् विज्ञानात्मतां विनाकारो न प्रकाशेतेति विज्ञानात्मैव वस्त्वाकार इति विज्ञानवादः। समेषां जडतया नित्य-

प्रकाशचैतन्यस्य सम्बन्धमन्तरा जडा न प्रकाशन्तामित्यनुपपत्त्यैव नित्यविज्ञानात्म-ब्रह्मणि सर्वेऽध्यस्ता इति वेदान्तस्य दृष्टिः, इत्थमेवाद्वैतसिद्धौ दृग्दृश्यसम्बन्धभङ्गप्रसङ्गे सम्बन्धा विकल्प्य विस्तरेण खण्डिताः। वैयाकरणसिद्धान्तलघुमञ्जूषायां नागोजि-महोदयस्य 'बौद्धैरर्थैर्बाह्यस्य शब्दस्य सम्बन्धो न घटत इति बौद्धः शक्तः शब्दोऽङ्गी-कर्तव्यः' इति सिद्धान्तेऽप्येषा दृष्टिः। अस्तु, बाह्यार्थमप्यङ्गीकुर्वतस्तस्य भट्टस्य तादा-त्म्यादिनिर्वचने किञ्चिद् वैलक्षण्यम्। यद्यपि भारतीयाः क्षणिकविज्ञानात्मत्वे दृष्टि-सृष्टिवादे च प्रकारान्तरण प्रत्यभिज्ञां सम्पादयन्ति, जार्जस्तु तदर्थमीश्वरमानसं विभुः, तेन सह जीवमानसानां घटाकाशमहाकाशवत् सम्बन्धं कल्पयति; तथापि विचारेणेश्वरमानसस्यान्योऽप्युपयोग इति तेनैव प्रत्यभिज्ञाया अपि समर्थने न न्यूनता। तथा च विज्ञानवादवदेवात्राप्यध्यासस्य गतिः।

जार्मनेयलीब्नीजदर्शनन्तु—सर्वं चेतनम्, परमाणवोऽपि चेतना येभ्यः स्थूल-जगतः सृष्टिः, पृथिवीपाषाणादयो मूकचेतनाः, मूकचेतनेभ्योऽपि वनस्पत्यादिक्रमेण जीवचैतन्यं वाचालं स्थूलं जायते, परमोत्कृष्टचैतन्यं त्वीश्वरचैतन्यमिति वर्णयति। चैतन्यं विज्ञानात्मैव मूकवाचालभेदेऽपि ग्राह्यग्राहकयोः साजात्यं स्फुटम्। साजात्ये तादात्म्यम्, प्रकाशाच्चैतन्यादतिरिक्तं नास्तीति प्रतिभाति, तथा च प्रकाशप्रकाश्ययो-रैक्यमध्यासमूलकमेव।

## प्रत्यभिज्ञादर्शनेऽध्यासः

( ३ ) प्रत्यभिज्ञादर्शने लीनीजस्य कश्चिदंश आयाति। शिवादेव समेषां सृष्टि-रिति चेतनात् सृष्टिः, सर्वस्य शिवात्मतया सर्वं चेतनम्। शिव-सदाशिव-महेश्वरा-द्यवस्थायां जडचेतनयोरेकीकरणात् प्रकाश्यचैतन्ययोरध्यासविलास इति प्रकृतो उदाहरणम्।

शिवस्य विमर्शशक्त्या 'अहम्' इति स्फुरणे जडप्रकाशयोरेकं स्फुरणम्; सदा-शिवावस्थायाम् 'अहम्' इदमिति रूपं बिभर्ति पूर्वोक्तम् (अहम्) इति स्फुरणम्। अह-मिति स्फुरणे विषय इदमंश आलङ्कारिकाणामध्यवसानमिव न स्फुरति, अहमिदमिति स्फुरणे आरोप इवोभयं चकास्ति, तत्राप्यहमित्येव प्रधानम्, तेन चैतन्यात्मना इदमंशो विषय आच्छादितो भवतीति तेषां प्रक्रिया।

ईश्वरावस्थायाम् 'इदमिदम्' इति विषयप्रधानो विमर्शः, परं चिदात्मना अहमंशेन विभेदरहित एवायमिदमंशो विषयः। विभेदस्तु मायाया अवतारे, ततः प्राक् शुद्धविद्यायाः साम्राज्याच्चिदात्मत्वमेव स्फुरतीति तेषां सिद्धान्तः। यद्यपि तन्मते वस्तुत एव विषयाणां चिदात्मत्वम्, नाध्यासिकम्; किन्तु वेदान्तरीत्या आध्यासिकं मिथ्यैव, निष्क्रियस्य निष्कलङ्कस्य शिवस्य न क्रियात्मकं स्वतः स्फुरणम्, अहमिति स्फुरणस्य वेदान्तमते आध्यासिकत्वात्, भामतीरीत्या पूतीकूष्माण्डीकृतत्वाच्च। विमर्शशक्तिवशात्तथा स्फुरणमिति चेद् भवतु नाम, तथा परं स्वाभाविकत्वाभावेन स्वाधिकरणे शिवे स्वतस्तदभावस्य सत्त्वेन मिथ्यात्वस्य दुर्वारत्वात्। ते तथा न मन्यन्त इति चेत्, शुक्तौ रजतमध्यवस्यन्तोऽपि शुक्तिसाक्षात्कारात् प्राग् रजतमाध्यासिकमिति न मन्यन्ते, अधिष्ठानसाक्षात्कारमन्तरेणाध्यासिकत्वग्रहस्याशक्यत्वात्। तथा च मायावतारात् प्राक् प्रत्यभिज्ञादर्शने युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः स्फुटोऽध्यासः। मायावतारानन्तरं तु दर्शनान्तररीत्या सम्बन्धाध्यास आयास्यतीति बोध्यम्।

## सांख्यमतेऽध्यासाः

(४) सांख्यमतेऽपि वेदान्तमतमिव विषयविषयिणोरध्यासो वर्णयितुं शक्यते। ब्रह्मेव सांख्यपुरुषोऽसङ्गः, न स्वतो विषयाणां सम्बन्धः संभवति, सङ्गस्य परिणामस्य वा आपत्तेः। सम्बन्धमन्तरा विषयप्रकाशो न संभवेत्; वस्तुतः सम्बन्धोऽनुपपद्यमानः स्वस्याध्यासिकतामादायैव विश्राम्यति, बुद्धिद्वारा सम्बन्ध इति चेद् वेदान्तेऽपि मायाद्वारैवाध्यासः, मायाधिष्ठाने ब्रह्मणि वस्तून्युत्पद्यन्ते, पुरुषस्य तु न वस्तूत्पादे उपयोग इति विशेषोऽपि न तथा प्रकृतेर्बुद्धेर्वा परिणामे पुरुषसन्निधानस्य चैतन्यावेशस्य वाऽपेक्षितत्वात्। मास्तु विस्तरः, वृत्त्यात्मिका बुद्धिर्विषयाकारा जायते, तत्र पुरुषस्याभासोऽपि तदाकार एव, अत एव तदानीं पुरुषबुध्योर्विवेको न भवति; वृत्तिसारूप्यमितरत्रेति योगसूत्रमपि। यत्र प्रकाशप्रकाश्ययोः सारूप्यं तत्र प्रकाशप्रकाश्ययोस्तादात्म्यम्, तदपि न वस्तुत इत्याध्यासिकम्, न चासङ्गस्यापरिणामिनः पुरुषस्येतरसारूप्यं वास्तवम्, प्रतिभासते च तथेत्यध्यासस्योदाहरणम्। एवं प्रायः प्रत्ययवादिषु कतिपयदर्शनेष्वाध्यासिकतादात्म्यस्योदाहरणं मृग्यम्।

अन्ये च प्रायो दार्शनिकाः सम्बन्धाध्यासवादिना ज्ञानेन प्रकाशेन सह ज्ञेयस्य विषयस्य तादात्म्यं नाङ्गीकुर्वन्ति; किन्तु सम्बन्धविशेषम्, कश्चिदवान्तरप्रक्रिया-विभेदोऽपि वर्तते, आन्तरज्ञानेन सह बाह्यस्य संयोगादिप्रसिद्धसम्बन्धासंभवात् सम्बन्धविशेषं कल्पयन्ति। वेदान्तिनस्तु तादृशस्य सम्बन्धस्यासिद्धेः सम्बन्धाध्यासं वदिष्यन्ति, सम्बन्धाध्यासे न वेदान्तिनां काठिन्यम्; यथा वासना तथाऽध्यासः, विषयविषयिणोर्भेदवासनावतां सम्बन्धस्यैवाध्यासात्। अत एव अहमिदं ममेदमिति द्विविधाध्यासवादिभाष्यम्।

विदेशीयानुभववादिदर्शनेषु प्रायः सम्बन्धाध्यास एवायास्यति, परं न तद्भारतीयदर्शनमिव स्फोरयितुं प्रभवामि, भारतीयप्रतिपादनशैल्या तेषां विश्लेषणासंभवात्। तत्रापि इङ्ग्लिशभाषानभिज्ञस्य मम हिन्दीद्वारा दूरादेव स्पृशतः। यथा इङ्गलैण्डवासिलाँकदर्शने श्रूयते— मनुष्येषु सहजं ज्ञानं नास्ति, बाह्यवस्तूनामनुभवेन मनसि ज्ञानं जायते। अस्यैव नाम अनुभववादः। सर्वं ज्ञानं शिक्षाधीनम्, संस्काररूपेण मनसि ज्ञानमस्ति, समेषां ज्ञानानां मूलं प्रत्यक्षमित्यादिसहजज्ञानस्य खण्डनादनित्यज्ञानस्य वर्णनाद् बाह्यस्याङ्गीकाराच्च वस्तुनो ज्ञानात्मत्वं नास्ति, ज्ञानस्य विषयेण सह कश्चित्सम्बन्ध एव, न तादात्म्यम्, किन्तु सम्बन्धभेदेऽप्याकाराकारिभावो विषय-विषयिभावो वेति स्फुटं वक्तुं नार्हामि। यदि बौद्धदर्शनस्य प्रभावस्तदा आकाराकारिभावः, अन्येषाञ्चेद् विषयविषयिभावः।

## बाह्यसद्वादिबौद्धमतेऽध्यासः

(५) आकाराकारिभावो यथा—ज्ञानाकारवादिनो बौद्धाः, तत्र विज्ञानवादि-मते ज्ञानाकारो न बाह्यविषयाधीनः, बाह्यस्यानङ्गीकारात्, किन्त्वान्तरकारणाधीनः, बाह्यसद्वादिनां बौद्धानान्तु विज्ञानेष्वाकारो बाह्यवस्त्वधीनः। इदं विज्ञानं घटविज्ञान-मित्यत्र विज्ञानस्य घटाकारत्वमेव तन्त्रम्। स्वाकाराकारित्वमेव विज्ञानविषययोः सम्बन्धः। विज्ञाने जाते तदनन्तरं बाह्यवस्तुवशादाकाराः समुत्पद्यन्त इति प्रक्रिया तु क्षणिकविज्ञानेन क्षमते, किन्तु बाह्याभ्यन्तरकारणसमवाये सकृदेव तदाकारं विज्ञानं जायते। तत्र यथा विज्ञाने विषयः कारणं तथा तदाकारेऽपि, तथा च ज्ञानविषया-कारयोर्जन्यजनकभावः। परोक्षेऽपि विषयाणां स्वानुभवजन्यसंस्कारद्वारा कारणत्वम्, परोक्षेऽपि सम्बन्धस्यानुभवादेतादृशपरम्परासम्बन्धस्य कल्पनम्, एतादृशं कल्पनमन्येषां

मतेऽप्यायास्यति। अत्र घटे तद्विज्ञाने चैक एवाकारो भिन्नो वा ? एकस्याकारस्य समकालमेव भिन्नद्वयवृत्तित्वासंभवाद् नाद्यः, भिन्नश्चेद् घटविज्ञानस्य पटविज्ञानत्वापत्तिः, सजातीयतानियामकधर्मस्यानिर्वचनाच्च। आन्तरबाह्याकारयोः कथं कीदृशः सम्बन्ध इत्यवशिष्यत एव, तस्माद्विज्ञानविषययोरध्यास एव।

न्यायनयेऽध्यासः

(६) अतः परं नैयायिकादीनां विषयविषयिभावादिसम्बन्धाध्यासः, तत्र प्रकारभेदः कश्चिदवश्यमवधातव्यः। बौद्धवेदान्तसांख्यानां नये चैतन्यं चेतनश्चैक एव पदार्थः। तथा सति प्रकाशकप्रकाशयोरभेदः, इन्द्रियबुद्धितद्वृत्त्यादीनां वस्तुतः प्रकाशत्वाभावात्। प्रकाशश्चैतन्यं तत्र क्रिया प्रकाशान्तरं नास्ति, येन चैतन्यस्य वस्तुतः प्रकाशकत्वं स्यात्, प्रकाशकत्वव्यवहारस्तु क्वाचित्को भाक्तः, न्यायादिनये त्वात्मा चेतनः प्रकाशकः, प्रकाशश्चैतन्यं ज्ञानम्, ज्ञानेन सह विषयस्य विषयविषयिभावः सम्बन्धः। यथा पाचकः शयानोऽपि पाचकस्तथा ज्ञानाभावसमयेऽप्यात्मा प्रकाशकश्चेतनश्च। येषां मते नित्यं ज्ञानं तेषां मते ज्ञानं निर्विषयमपि। बौद्धानां विज्ञानमपि कदाचिन्निर्विषयं भवति, परं नैयायिकादीनामनित्यं ज्ञानं न कदाऽपि निर्विषयम्; विषयावभासो हि ज्ञानम्, स च सांख्यवेदान्तमतेऽप्यनित्य इति साधर्म्यमवधेयम्। प्रकृते त्वान्तरस्य ज्ञानस्य कथं बाह्येन विषयेण सम्बन्ध इति सम्बन्धावभासो मिथ्या, अतः सम्बन्धाध्यासः। विषयत्वादीनां सम्बन्धत्वं नास्तीति खण्डनं तु वेदान्तग्रन्थेषु वर्तत एव।

(७) गुरुमतेऽप्येष एव मार्गः। अतीन्द्रियं ज्ञानं स्वांशेऽतीन्द्रियम्, विषयांशे तु प्रकाश एव। ज्ञाततादिसमुत्पादेन नात्र विशेषः, ज्ञानस्य विषयेण सह सम्बन्धे सत्येव तदुत्पादव्यवस्था, सम्बन्धस्याध्यासिकत्वमात्रेणात्रोदाहरणम्।

(८) रामानुजदर्शनेऽपि विषयविषयिभावः, परमाभासः प्रक्रियारीत्या अन्यस्य सम्बन्धस्य आयाति। ते हि ज्ञानस्य गुणत्वं द्रव्यत्वञ्चाङ्गीकुर्वन्ति, दूरस्थस्य विषयस्य प्रभाज्ञानमपि स्वीकरोति, प्रभाऽपि द्रव्यं स्यात्। सूर्यचन्द्रनेत्रादीनां प्रभेव ज्ञानप्रभया सह संयोगादेरपि संभवः; तथापि तेन न निर्वाहः। प्रत्यक्षस्थले ज्ञानप्रभया निर्वाहेऽपि परोक्षस्थले संस्कारद्वारैव विषयाणामान्तरज्ञानेन सम्बन्धो वर्णनीयः स्यात्, संस्कारेण सह तु विषयविषयिभाव एव।

अत्रापि ज्ञानं स्वसम्बद्धविषयेषु प्रभां सञ्चारयति; असम्बद्धेष्वपि वा ? द्वितीयेऽतिप्रसङ्गः, प्रथमे कः सम्बन्धः ? इन्द्रियद्वारक इति चेदन्येन्द्रियसम्बन्धे सति अतिप्रसङ्गः। इन्द्रिये स्वीयत्वं दीयते चेत्, किं नाम स्वीयत्वम् ? अदृष्टद्वारकत्वेऽन्योन्याश्रयः, तथा चेन्द्रिये शरीरे चाध्यासनिमित्तं स्वीयत्वमुदाहरणम्। किञ्च, परोक्षस्थले विषयाणामान्तरसम्बन्धः संस्कारद्वारा वर्णनीयः, संस्कारविषययोः सम्बन्धो विषयानुभवसम्बन्धाध्यासपूर्वक एवेति तदप्यध्यासोदाहरणम्।

इदञ्च ममाध्यासनिरूपणम् 'विषयविषयिणोः' इत्याद्यध्यासभाष्ये प्रस्तुतम्, अग्रे च शारीरकभाष्ये क्वचित्क्वचिदुपसंहृतम्। अद्वैतसिद्धौ दृग्दृश्यसम्बन्धभङ्गप्रसङ्गेऽन्यानि मतानि निरस्य ज्ञाने विषया अध्यस्ता इति पर्यवसानं कृतं वर्तते, परं सा रीतिरन्या, तत्र के के सम्बन्धाः संभवन्तीति प्रस्तुत्य तेषां खण्डनमस्ति, दर्शनविशेषचर्चा नास्ति। सम्बन्धा अपि कल्पिताः प्रायो नात्र निरूपिताः, किन्तु विदेशीयकतिपयदर्शनेषु 'आन्तरेण बाह्यस्य कः सम्बन्धः ? कथं सम्बन्धः ?' इति प्रश्नेनैव दर्शनस्योपक्रमः प्रचलति, तेन तस्य महत्त्वं प्रतीयते, अस्य प्रश्नस्य महत्त्वं भारतीयदर्शनेष्वपि वर्तत इति निरूपयितुमध्यासनिरूपणक्रमोऽयं समादृतः। अनेनैकेनैवाध्यासनिरूपणेन सर्वेषां विषयाणां मिथ्यात्वमायातीत्यध्यासेष्वस्य समादरः।

अध्यासस्य लक्षणं तत्समन्वयः। अंशेन प्रकारान्तरेण वा सोऽध्यासः सर्वेषां तीर्थङ्कराणां सम्मत इति शारीरकभाष्ये वर्णितमास्ते, व्याख्यातृभिरुपबृंहितञ्च। तद्रीत्या पुनर्वर्णनमुपेक्षितं विशेषफलाभावात्, ममादृतशैली न केनापि समाश्रितेति सा निरूपिता। यद्यपि भाष्यरीतिमाश्रित्य श्रीरामानुजदर्शनस्य सत्ख्यातिं प्रत्यभिज्ञादर्शनस्य अपूर्णख्यातिं माध्वस्य अन्यथाख्यातिवैलक्षण्यञ्च कश्चिद् वर्णयेच्चेत् सम्यगेव स्यात्, परमत्र लघुनिबन्धे सन्निवेशयितुं न शक्नोमीत्युपसंहराम्येव।

## मायापरिचयः

एतादृशस्य सर्वसिद्धस्य निखिलव्यवहारनिदानस्यानादिप्रवाहपतितस्य एकस्मिन् स्वयंप्रकाशे चिदात्मनि प्रकाशे नैकप्रपञ्चविलक्षणविषयजाताध्यासस्य मूलमनादिसिद्धानिर्वचनीयभावाभावविलक्षणां मायां निर्दिशति भगवती श्रुतिः— "इन्द्रो मायाभिः पुरुरूप ईयते" आत्माविज्ञानं मायावृत्त्यादिभिर्बहुरूपतां गच्छतीत्यर्थः। अन्येऽपि दार्शनिकाः प्रायो निखिलानर्थमूलमनादिसिद्धं भावरूपमेव किमपि वस्तु

शब्दभेदेन वर्णयन्ति। लोकेऽप्यद्भुतप्रकाशनकर्मणि मायाशब्दः प्रयुज्यते, तथैवात्र दर्शनेऽप्यघटितघटनापटीयस्त्वेनास्या निरूपणमायाति।

बौद्धमतम्

(१) बौद्धदर्शनेऽविद्यामायाशक्तिवासनाशब्दैर्विज्ञानस्य विविधाकारप्रकाशनशक्तेर्वर्णनमायाति, तच्च वर्णितं वस्त्वनादिभावरूपञ्च। यद्यपि तन्मते वासनावस्तु स्थिरं न संभवति; सर्वस्य क्षणिकत्वाद् वासनाधारत्वेन कस्यचिदनङ्गीकाराच्च, किन्तु कस्यचिद् विषयानुभवस्यानन्तरं कारणमहिम्ना विज्ञानसन्ततौ कश्चित् प्रभावपातो जायते, भवति च प्रथमं पठतो बालस्य गणितज्ञस्य वृद्धस्य च चतुर्गुणिताः पञ्चविंशतिरिरिति बुद्धौ विशेषः, तस्य च प्रभावपातस्य सन्तानेऽनादितेति विपर्यासहेतुर्मुक्तिं यावदनुवर्त्यस्ति किमप्यनादिभाववस्त्विवति, तत्स्थानेऽत्र मायाऽभिधानम्।

(२) कुत्रचिद् वैष्णवदर्शने मायाशब्देनेश्वरेच्छाऽपि व्यवहृता, सा च नित्या भावरूपा चेति स्फुटमेव। तया चेच्छया मिथ्यावस्तुनोऽपि सर्जनमायात्येव, किन्तु माया मुक्तौ नानुवर्तते, भगवदिच्छा तु सर्वं मायाकार्यं सम्पादयन्ती सनातनीति विशेषः। तत्रापि सहकारिसाकल्यवैलक्षण्येन मुक्तौ न मिथ्या सृष्टिः।

(३) प्रत्यभिज्ञादर्शनस्यापि माया इत्थं वर्ण्यते—"कलादीनां तत्त्वानामविवेको माया" इति शिवसूत्राभिमतम्। अविवेकवशाज्जडेषु शिवात्मता न प्रकाशते, अहमंशचिद इदमंशजडस्य च स्वातन्त्र्येण पृथगवभासः, तेन द्वैतं स्फुटं भवति, क्रमशश्चैतन्यांशस्य सर्वानुस्यूतत्वसंकोचो जायत इत्यादि। अत्राविवेकपदेन सत्यानृतमिथुनीकरणस्वभावः, जडेषु शिवात्मता न प्रकाशत इत्यनेनाधिष्ठानस्यावरणम्। पृथगवभासशब्देनैकस्मिन्ननेकप्रकटनरूपविक्षेपशक्तिः सूच्यते। अतोऽद्वैतिनां मायया विशेषसाम्यं विभर्ति, एतावान् विशेषः—जडवर्गेषु शिवात्मत्वस्फूर्तेर्निरोधमारभ्यैवानन्तरं मायाकार्यं तद्दर्शनस्याभिमतम्। ततः प्राक्तनस्य 'अहम्' 'अहमिदम्' इत्यादिस्फुरणस्य विमर्शशक्त्या शुद्धविद्यातत्त्वेन च निर्वाहः क्रियते। वेदान्ते च विमर्शशक्तेः कार्यं मायाकार्यमेव। स्वप्रकाशचैतन्यरूपे ब्रह्मणि स्वतः स्फुरणादिकर्मासंभवात्, शक्तिश्च मायैव।

यद्यपि दर्शनेष्वीश्वरस्य सृष्टिप्रलयानुग्रहावग्रहादीनां विधाने जीवानां कर्मशक्तिभूतान्यदृष्टानि सहकारीणीत्यदृष्टानां कर्मणां वेश्वरशक्तित्वव्यवहारो दृश्यते

रामानुजदर्शने क्वचिन्मायाशब्देन कर्मणो ग्रहणमायाति, तथापि न महेश्वरमाया-शक्त्या विरोधः, कर्माण्यदृष्टानि वा मायाशक्तिप्रयुक्ताध्यासनिमित्तानीति माया-साधकान्येव ।

( ४ ) सांख्यदर्शने मायाया विक्षेपशक्तिप्रयुक्तं कार्यं स्वतन्त्रं प्रधानं निर्वर्तयति, विवेकख्यातौ तत्त्वसाक्षात्कारे माया निवर्तते । प्रधानस्य त्वौदासीन्यमात्रम्, आवरणशक्तिस्तु तमोगुण एव, तस्यापि पूर्ववदेव विशेषः । तामसं बुद्धेर्धर्मोऽज्ञानं सर्वथा वेदान्तिमायामनुकुरुते, अनादिभावरूपं सात्त्विकतत्त्वख्यातिज्ञानेन निवर्त्यञ्च । एवञ्च मायासदृशं वस्त्वन्येषामपि दार्शनिकानामभिमतम् । न वेदान्तस्यैवोपरि एतादृशविलक्षणवस्तुस्वीकारस्य भारः, सांख्यानामविवेकपदं नञ्घटितत्वेन विवेकाभावे भ्रममातनोति, अभावस्य भावकार्यजनकत्वन्तु नाविसंवादम्, धर्माधर्मादिवद् विरुद्धा-र्थकमेव नञ्पदं प्रतिभाति, अत एव क्वचित् (अविवेकख्याति) शब्देन भावरूपतयाऽ-प्युल्लेख आयाति । इत्थमेव च प्रकृतिपुरुषयोर्बुद्धिपुरुषयोर्वा 'एकं दर्शनमविवेक' इति वर्णनं मिलति, तच्च संवेदनं वेदान्तरीत्या अध्यासप्रतीतिः, सांख्यरीत्या चाविवेकख्यातिः, योगसूत्रे भावरूपस्यैव ख्यातिविशेषस्याविद्याशब्देन ग्रहणं स्फुट-मुक्तम् । मायाया इव अविद्यायाः सर्वानर्थमूलत्वञ्च वर्णितम्, विवेकख्यात्या च ज्ञानेनाविवेको निवर्तत इति सांख्यस्याविवेको मायाया नामान्तरमिव विलसति ।

( ५ ) दुःखजन्मप्रवृत्तिप्रभृतिन्यायसूत्रे सोपपादनं मिथ्याज्ञानं सर्वानर्थकारण-मिति प्रतिपादितम्, स एव च मिथ्याज्ञानशब्दः शारीरकाध्यासभाष्ये सर्वाध्यासकारणत्व-निर्देशाभिप्रायेण 'मिथ्याज्ञाननिमित्त' इत्यत्रोपात्तः । तथा चोभयोर्मिथ्याज्ञानयोरध्या-सस्य भ्रमप्रतीतेः कारणत्वं सत्यानृतमिथुनीकरणमनादिभावरूपत्वं विद्यानिवर्त्यत्वञ्च समानम् । एतावता सर्वसंसारानर्थमूलमनादिभावरूपं तत्त्वज्ञाननिवर्त्यं वस्तु नैया-यिका अपि अङ्गीकुर्वत इत्यायातम् । अनादिप्रवाहपतितानामुपभोगपर्यवसायिनां कर्मणामुपभोगायैव संसारसर्जनमिति सिद्धान्तः, कर्माणि तु शरीरेन्द्रियादिष्वात्म-त्वात्मीयत्वादिज्ञानमन्तरा न प्रादुर्भवेयुः । अत एव च शारीरकभाष्ये शरीरादिष्वहं ममेति बुद्धिमन्तरा न कश्चिद्यतत इति प्रोच्यते, नैयायिकाः अपि तथैव ब्रूयुः, को भेदः ? ज्ञानस्य द्विक्षणस्थायित्वेऽपि मिथ्याज्ञानस्य प्रवाहानादित्वं वर्तत एव, मिथ्याज्ञानस्य दृढा स्थायिनी वासना वा तादृशी ।

( ६ ) वेदान्तविरोधमनीहमानोऽपि श्रीनागोजिभट्टमहोदयो वैयाकरणसिद्धान्तलघुमञ्जूषायां बौद्धार्थनिरूपणेऽनादिपरम्परया प्रचलन्ती मिथ्याज्ञानतद्वासनारूपा माया अविद्या वेति सिद्धान्तीचकार, परं विवेचने मिथ्यानुभवस्तद्वासनाया आधारश्च बुद्ध्याद्यध्यासशरणग्रहणमन्तरा नात्मानं लभते, अतस्ततः प्रागध्यासः, ततश्च प्राक्तन्निमित्तं मायेति सिध्यति, इत्यलं विस्तरेण। एतावता दर्शनक्षेत्रे मायासदृशं वस्तु प्रसिद्धं सर्वसम्मतञ्चेति प्रायो दर्शितम्। अतः परं संक्षेपेण सम्प्रदायं प्रदर्श्यानुपदमेवोपसंहरामि।

मायायाः सम्प्रदायः

श्वेताश्वतरोपनिषदि "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्" इत्यत्र व्याख्यानभेदेन शक्तिपदेन गुणपदेन चैषा माया निर्दिश्यते। देव आत्मा परमेश्वरस्तस्य शक्तिर्माया स्वगुणैः स्वीयावरणादिविविधशक्तिभिर्निगूढां विविक्तत्वेनाग्रहीतामित्यर्थः। अथवा—देव आत्मा एव प्रकाशशक्तिः स्वगुणैः स्वाधिष्ठितादिभिर्मायाभिरावृतामित्यर्थः, मायाया एकवचनान्तेन बहुवचनान्तेन च भूरिप्रयोगात्। तत्रैव चतुर्थाध्याये ९।१० मन्त्रयोः—

तस्मान्मायी सृजते विश्वमेतत्।
तस्मिँश्चान्यो मायया सन्निरुद्धः॥
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

मायाविशिष्टे विश्वसृष्टिकर्तृत्वं जीवानां मायावशगत्वम्। प्रकृतिशब्देन सृष्टिक्रियाया मायाद्वारेण ब्रह्मण्यध्यस्तत्वम्, मायाया अवयवा मायिन्यध्यस्ताः। अतः सर्वं जगद् मायिनोऽवयवभूतम्, तेन च महेश्वरस्यान्तर्यामित्वं वर्णितम्।

एषा मायैव विद्याविरोधित्वेनाविद्याशब्देन काठकोपनिषदि वर्णिता—

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता।
विद्याऽभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः (१।३।११) इत्यत्राव्यक्तशब्देनापि। लिङ्गपुराणेऽज्ञानशब्देनोल्लेखः—

तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम्।
परतन्त्रे स्वतन्त्रे च भिदाभावाद्विचारतः॥

"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति ब्रह्मसूत्रे पूर्णतयाऽभिव्यक्तिविरोधित्वमस्याः। गौडपादकारिकायां भूयसाऽस्याः कीर्तनम्—"संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः" (३।१०)। अत्र आत्मनो मायाऽविद्या, ततश्च नाना सृष्टिरित्यर्थः।

"नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।" (३।२५) अत्रापि पूर्व एवार्थः। "कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया" (२।१२)। अत्रैकस्मिन्नधिष्ठानेऽनेककल्पनाया मायाकरणमुक्तम्। "स्वप्नमाये यथादृष्टे गन्धर्वनगरं यथा" (२।३१)। अत्र मिथ्यावस्तु मायाऽर्थः। "जन्ममायोपमं तेषां सा च माया न विद्यते" (४।५८)। अत्र मायायाः सद्भिन्नत्वं वर्णितम्। अन्या चैतच्चर्चाऽद्वैतसिद्धितट्टीकादिषु प्रपञ्चितेत्यवसीयते।

महामाये मातः सकलगुणकाये चितिरते
　　निकाये ब्रह्माख्ये गतविविधदाये परिगते।
गतच्छाये जीवे वितर दययेशे सुनयने
　　नयेनासीना त्वं सरसविटपे दर्शनवने॥



# मायावादस्तत्स्वरूपञ्च

श्रीसत्यनारायणमिश्रः, वल्लभवेदान्ताध्यापकः, वा० सं० वि० वि०, वाराणसी।

माया हि दर्शनशास्त्राणां मुख्यप्रतिपाद्येष्वन्यतमो विषयः। सा हि येन केनापि रूपेण सर्वेषु दर्शनेष्वभ्युपगता। मायावादो यद्यप्यद्वैतवेदान्तसिद्धान्ततया दार्शनिकजगति सुप्रसिद्धः, तथापि मायायाः सर्वथाऽस्वीकारः क्वापि दर्शने नास्ति। तद्वादस्याद्वैतवेदान्तीयत्वेन प्रसिद्धेर्यन्निदानं तदग्रे वक्ष्यते। अस्य विचारस्य, अर्थाद् मायायाः सर्वदर्शनाभ्युपगतत्वस्य साक्ष्ये उदयनाचार्याणां न्यायकुसुमाञ्जलेः प्रथमस्तबकार्थसंग्राहकं पद्यमुद्धर्तुं शक्यते। यथा—

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम॥

अस्मिन् श्लोके न्यायवैशेषिकदर्शनयोः स्वीकृतायाः परमेश्वरस्य सहकारिशक्तित्वेनोपगताया अदृष्टसमष्टेः, सांख्ययोगदर्शनयोः स्वीकृताया मूलप्रकृतेः, अद्वैतवेदान्तदर्शनेऽभ्युपगताया अविद्याया दुरुन्नेयत्वनिमित्तेन मायापदव्यपदेश्यत्वं व्युत्पादितम्। इत्थं माया सर्वदर्शनानामविप्रतिपन्नो विषय इति निर्विवादम्, परं दर्शनान्तरापेक्षया विभिन्नवेदान्तसम्प्रदायेष्वस्ति मायासम्बन्धे कोऽप्यभिनवो विचारः, काचिद् विलक्षणैव धारणा।

## शाङ्करवेदान्ते माया

तत्र यत्र वेदान्ते मायायाः सर्वतः प्रामुख्यं मन्यते, तस्मिन्नद्वैतवेदान्ते वर्णितं मायायाः स्वरूपं प्रागुपन्यस्यते। तथाहि—"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुत्यनुसारेणैकस्या एव जीवेशयोः समग्रस्य जगतश्चोपादानभूतायाः प्रकृतेर्माया अविद्येति रूपद्वयम्। यतः प्रकृतिः सत्त्वरजस्तमोरूपत्रिगुणात्मिका, अतो माया अविद्येत्युभयमपि त्रिगुणात्मकम्। तत्र शुद्धसत्त्व-

प्रधाना प्रकृतिर्माया, मलिनसत्त्वप्रधाना प्रकृतिश्चाविद्या। सत्त्वस्य शुद्धत्वं मालिन्यं च क्रमेण रजस्तमोभ्यामनभिभूतत्वरूपमभिभूतत्वरूपं च। अथवा विक्षेपशक्तिप्रधाना प्रकृतिर्माया, आवरणशक्तिप्रधाना प्रकृतिश्चाविद्या। विक्षेपशक्तिर्नामाधिष्ठानविलक्षणस्य कार्यस्योत्पादिका शक्तिः, विरुद्धतया विपरीततया विलक्षणतया वा क्षेपणमधिष्ठानस्य विवर्तनं प्रकाशनं वेति व्युत्पत्तेः। आवरणशक्तिश्चाधिष्ठानस्य वास्तवस्वरूपप्रतिभासप्रतिबन्धिका शक्तिः, यद्वशादधिष्ठानं स्वेन रूपेण न प्रकाशते। आभ्यामुभाभ्यां शक्तिभ्यां सम्भूय प्रवृत्ताभ्यां प्रकृतिर्जगतोऽधिष्ठानभूतस्य ब्रह्मणः स्वरूपं तिरोदधाति। तत्र ततो विलक्षणं विस्तृतं विचित्रं च प्रपञ्चं रचयति प्रत्यक्षयति च। इत्थमियं माया विश्वस्य परिणाम्युपादानतया ब्रह्मात्मकेऽधिष्ठाने जगदाकारेण परिणमति। जडायास्त्रिगुणात्मिकायास्तस्याः परिणामतयैव जगतो जाड्यं त्रिगुणात्मकत्वं च। प्रकृतिरियं मायाभावेनेश्वरस्याविद्याभावेन च जीवस्य सहकारिणी शक्तिः। माया-अविद्याशब्दाभ्यां व्यवहृता त्रिगुणात्मिका प्रकृतिः, अज्ञानशब्देनाप्यद्वैतवेदान्ते परिकीर्तिता। सत्त्वासत्त्वाभ्यां निर्वचनानर्हतयाऽनिर्वचनीया च। अस्या एव विलासभूतं सर्वं जगदिति। सुप्रसिद्धोऽध्यासोऽप्येनामेवोपजीवति।

## शुद्धाद्वैतवेदान्ते माया

अत्र शुद्धाद्वैतवेदान्तिनः। तथा हि—तन्मते मायानाम भगवतः परमेश्वरस्य स्वरूपभूता शक्तिः। सा हि प्रदीपात् तदीयप्रभेव सहस्ररश्मेस्तदीयालोक इव चन्द्रमसस्तदीया चन्द्रिकेव सर्वथा भगवतोऽभिन्नेति "प्रकाशाश्रयवद्वा तेजस्त्वात्" इत्यादिसूत्रे भाष्यकारैः प्रतिपादितम्। तथा च "विद्याविद्ये हरेः शक्तिः" इत्यादिना सर्वनिर्णयेऽपि। अतो माया भगवतः शक्तिः "मम माया दुरत्यया" इत्यादिगीतोपनिषद्भ्यः सिद्ध्यति। इदं जगद् भगवान् विरचयति। अतो न मायिकम्, किन्तु ब्रह्मात्मकमेव। "स आत्मानं स्वयमकुरुत, स हैतावानास, स वै सर्वमिदं जगत्, इदं सर्वं यदयमात्मा, आत्मैवेदं सर्वम्, स सर्वं भवति, पुरुष एवेदं सर्वम्" इत्यादिश्रुतिभिर्ब्रह्मात्मकः प्रपञ्चो ब्रह्मकार्यमिति सिद्धान्तः। तथोपपादितं भाष्यकारैः—"आत्मकृतेः परिणामात्" इत्यत्र। अतः स्वयमेव भगवान् जगद्रूपेणाविर्भवति। तथोक्तं निबन्धे—

"मृदादि भगवद्रूपं घटाद्याकारसंयुतम्" इति।

अतः "सर्वं खल्विदं ब्रह्म" इति श्रुत्युक्तं ब्रह्मात्मकत्वं निराबाधमेव।

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः।
अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा॥

इति श्रीमद्भागवतोपबृंहणाच्च। परन्तु व्यामोहिका माया जीवं व्यामोह्य तदीयबुद्धौ प्रापञ्चिकसद्वस्तुसदृशं मायिकं पदार्थमुत्पाद्य तदीयबुद्धौ पुरःस्थितविषये च प्रक्षिपति। तदा पदार्थग्रहणं तस्यापि ग्रहणात् तद्विशिष्टज्ञानं भ्रमात्मकं भवति। तथा सति वस्तुग्रहणे मायिकधर्माणामपि ग्रहणात्—

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्॥

तथा "देहं मनोमात्रमिमं गृहीत्वा" इत्यादिवाक्यानि सावकाशानि भवन्ति, इमानि तादृक्प्रतीतिमूलकानि प्रमाणान्यवलम्ब्य विवर्तादिवादानां प्रवृत्तिः। पुराणादौ तादृशवादमूला मायिकत्वोक्तिर्वैराग्यार्थमुपयुज्यत इति व्यवस्थापितं तत्त्वदीपे। अतः प्रतीतिरेव मुग्धानां मायिकी, न वस्तुनि कश्चिद्दोषः स्वाभाविकः। अत एव श्रीमद्भागवते ब्रह्माणं प्रति भगवतोक्तम्—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथा भासो यथा तमः॥

एतद्व्याख्याने सुबोधिन्यामुक्तम्—विषयो भगवान्, विषयता मायाजन्या। विषयतया पदार्थानामन्यथा भानम्, न तु पदार्था अन्यथा। अतो विषयताजनितं ज्ञानं भ्रान्तम्, विषयजनितं प्रमा। विषयता च मायाजन्या, माया च भगवतः शक्तिरिति सर्वं सुस्थम्। इयं विषयता द्विधा—आच्छादिका एका, अन्यथाप्रतीतिहेतुश्चापरा। विषयताद्वयमप्याच्छादकमन्यथाप्रतीतिहेतुरूपं च ब्रह्मज्ञानेन नाश्यत इति सुधीभिराकलनीयम्।

### अध्यासस्वरूपम्

अध्यासो नाम सा ख्यातिः, ययैकं वस्त्वन्यात्मना व्यवहारपदवीमुपारोहति। सा च ख्यातिर्विभिन्नेषु दर्शनेषु विभिन्नैः प्रकारैरुपवर्णिता। तत्तद्दर्शनाभिमततत्तद्विशेषबुबोधयिषया च विभिन्नैः शब्दैस्तेषु तेषु दर्शनेषु व्यपदिष्टा। तत्र न्यायवैशेषिकदर्शनयोरन्यथाख्यातिः, मीमांसादर्शने अख्यातिः, सांख्यदर्शने सदसत्ख्यातिः,

रामानुजदर्शने सत्ख्यातिः, माध्वदर्शनेऽभिनवान्यथाख्यातिः, अद्वैतदर्शनेऽनिर्वचनीयख्यातिः, शुद्धाद्वैतदर्शने चाविद्वद्दशायामन्यख्यातिः, विद्वद्दशायां चाख्यातिः।

तत्रान्यथाख्यातिवादिनामिदमाकूतम् — चाकचिक्याद्युद्बुद्धसंस्कारसहकृतेन दोषोपहतेन चक्षुषा सन्निकृष्टं शुक्त्यादिकमेव रजताद्यात्मना गृह्यते। अयं भावः— यदा हि प्रकृष्टे सौरालोके शुक्तिशकलं चक्षुषा सन्निकृष्टं चकचकायमानं दृश्यते, तदा रजतवदिदं चकचकायत इत्येवंविधेन चाकचिक्यलक्षणसादृश्यदर्शनेन पूर्वानुभूतरजतविषयकः प्रथमतोऽनुवर्तमानो रजतविषयकः संस्कारः समुद्बुद्ध्यते। सादृश्यदर्शनात्मको दोषः पुरोवर्तिनि शुक्तिशकले शुक्तित्वभानं प्रतिरुणद्धि। इदंत्वेन केवलेन प्रतिभासमाने तत्र तस्मिन् रजतत्वबाधज्ञानाभावसहकृतेन रजतत्वस्मरणात्मकेन ज्ञानलक्षणसन्निकर्षेण सन्निकृष्टं रजतत्वं प्रत्यक्षं प्रकाशते। न च स्मृतेस्तत्तावगाहितानियमेन तद्रजतमित्येवंभूतस्यैव स्मरणस्य युक्ततयेदं तद्रजतमित्याकारिकैव धीः स्यात्, न त्विदं रजतमित्याकारिकेति वक्तुं शक्यम्; तत्तांशे संस्कारानुद्बोधलक्षणप्रमोषस्य सम्भवेन तत्ताविनिर्मुक्तस्य रजतस्य स्मरणे स्फुरणे च बाधकाभावात्।

परमिदं नोचितम्, ईदृशज्ञानस्य उत्पत्त्ययोगात्, अन्यथाख्यातित्वस्य दुरुपपादत्वाच्च। तथाहि—पुरोवर्त्तिनि शुक्तिशकले रजतत्वस्य भानं लौकिकसन्निकर्षासाध्यतया ज्ञानलक्षणसन्निकर्षसाध्यमेव मन्तव्यम्। ज्ञानस्य च सन्निकर्षत्वं विविधदूषणग्रस्ततयाऽशक्योपगमम्। तथाहि—ज्ञानं यदि सन्निकर्षः स्यात् तदा चक्षुःसन्निकृष्टे पर्वतादौ परामर्शात्मकज्ञानेन विषयीक्रियमाणस्य वह्न्यादेर्ज्ञानात्मकसन्निकर्षवशात् प्रत्यक्षमेव स्यात्। एवञ्चानुमानस्य प्रमाणान्तरत्वं भज्येत। किञ्च, ख्यातेरन्यथात्वे यथार्थतापत्तिः। यतो ह्यन्यथात्वमारम्भरूपं विपरिणामरूपं तादात्म्यविशेषरूपमेव वा निर्वाच्यम्। तच्च सर्वमेव दूषणग्रस्तम्। तथाहि—सर्वं तदसम्भाव्यमेव। इन्द्रियसन्निकृष्टस्य शुक्त्यादेर्मृत्तिकातो घटस्येव रजतस्यारम्भे दुग्धस्य दध्यात्मनेव रजताकारेण परिणामे, लोहादीनां पारसमणिस्पर्शे सुवर्णतादात्म्यस्येव रजततादात्म्ये वा घटदधिसुवर्णादिवत् शुक्त्यादेः स्थाने रजतादेरेव प्रसक्त्या तज्ज्ञानस्य यथार्थताया अपरिहार्यत्वात्। न चेष्टापत्तिः, भ्रममात्रस्य उच्छेदापत्तेः। अन्यथाऽख्यातौ भासमानरजतादेर्वास्तवरजतादिकार्याणामापत्तेश्च। न च नोक्तप्रकाराणामन्यथात्वरूपता मन्यते, किन्त्वेकत्र सतोऽन्यत्रासतोऽपि प्रकारीभाव एवान्यथात्वम्, तथा च नोक्त-

दोषाणां प्रसक्तिरिति वाच्यम्; रजतत्वादिना गृह्यमाणे पुरोवर्तिनि रजतत्वादेः सत्ताया अलाभे तेन तत्र लब्धसत्ताकस्य शुक्तित्वादेरभिभवासम्भवात्। न च तत्र न रजतत्वादिना शुक्तित्वादेरभिभवः, किन्तु तज्ज्ञानेनैव स्वीक्रियते, ज्ञानं च तत्र सदेवेति वाच्यम्; तथा सति शुक्तिज्ञानेन रजतत्वस्य, रजतज्ञानेन शुक्तित्वस्य चाभिभवस्य विनिगमनाविरहेण मान्यतयैकतरस्यापि ज्ञानानुपपत्तेः। किञ्च, उपनीतसत्ताकेन वास्तवसत्ताकस्याभिभवे पुरुषभेदेन पुरोवर्त्तिनि शुक्त्यादौ रजतत्वशुक्तित्वयोर्युगपद् भ्रमप्रमानुपपत्तेः। अतोऽन्यथाख्यातिवादो न कथञ्चिदपि क्षोदक्षमः।

मीमांसादर्शने गुरुसंज्ञया प्रसिद्धाः प्राभाकरास्तादृशस्थलेऽख्यातिमभ्युपयन्ति। अख्यातिर्नाम अल्पाख्यातिः, अल्पत्वं च विशेष्यविशेषणयोः संसर्गाभानम्। तथा च तन्नये पुरोवर्तिनः शुक्त्यादेः प्रत्यक्षं रजतादेश्च स्मरणमिति ज्ञानद्वयं जायते। तत्र न किमपि ज्ञानं शुक्त्यादौ रजतत्वादेः सम्बन्धं विषयीकरोति। उक्ते ज्ञानद्वये तदीय-विषयद्वये च भेदाज्ञानमेव तयोर्ज्ञानयोरैक्यस्य शुक्त्यादे रजताद्यात्मकतायाश्च व्यप-देशस्य मूलम्। इत्येवं तन्नयेऽन्यथाख्यातिर्न भवति, किन्त्वन्यथाव्यपदेश एव भवति। तत्प्रवृत्तिश्चान्यथाख्यातिस्थानीयाया अख्यातेः सम्पद्यत इति सर्वमेव ज्ञानं तन्मते यथार्थमेव, परमिदमपि मतमालोच्यमानं स्थिरतां न लभते; शुक्त्यादौ रजतत्वादि-संसर्गाग्रहे तत्र रजतार्थिनः सर्वजनानुभवसिद्धायाः प्रवृत्तेरनुपपत्तिप्रसङ्गात्। अय-माशयः—सद्रजतादिस्थले रजताद्यर्थिप्रवृत्तिं प्रति रजतत्वादिसंसर्गज्ञानस्य कारणता क्लृप्ता। अतो भ्रमस्थले शुक्त्यादौ रजतत्वादिसंसर्गज्ञानं यदि न स्यात्, तर्हि तत्र रजताद्यर्थिप्रवृत्तिर्नोदियात्। यदि च तत्स्थलानुरोधेन रजतत्वाद्यसंसर्गाग्रहरूपाया अख्यातेरेव विशेष्यविशेषणगोचरज्ञानद्वयसहकृतायाः प्रवृत्तिहेतुत्वं मन्येत, तदा सद्रजतादिस्थलेऽपि तत एव प्रवृत्त्यादेरुपपत्त्या विशिष्टज्ञानस्योच्छेदः स्यात्; न चेष्टापत्तिः, रजताद्यर्थिप्रवृत्तिं प्रति रजतत्वादिसंसर्गज्ञानत्वेन कारणत्वापेक्षया रज-तत्वादिसंसर्गाभावज्ञानाभावत्वेन कारणतायां गौरवात्।

सांख्यास्तु तादृशस्थले सदसत्ख्यातिं मन्यन्ते। अर्थात् तत्र जायमानाऽख्यातिः सन्तमसन्तं चार्थं विषयीकरोति; यथा शुक्तिरजतस्थले जायमानमिदं रजतमित्या-कारिका ख्यातिर्धर्मिणि विद्यमानमिदन्त्वमविद्यमानं रजतत्वं च गृह्णातीति। इदमपि मतमन्यथाख्यातिसमकक्षतया तत्पक्षीयदोषैरेवास्कन्दिततया च परित्याज्यम्। रामा-जदर्शनेऽपि प्राभाकरदर्शन इव सर्वज्ञानं यथार्थमेव, किन्तु न तत्र तद्दर्शन इव भ्रम-

स्थले विशेषणविशेष्ययोः संसर्गाख्यातिः, किन्तु तयोः संसर्गख्यातिरेव। कथमिति चेत्? त्रिवृत्करणश्रुत्या सर्वत्र सर्वस्य सन्निहितत्वेन सर्वस्य सत्त्वेन शुक्तौ रजतांशस्यापि सत्तया दोषमहिम्ना शुक्तित्वभानप्रतिबन्धे लौकिकसन्निकर्षेणैव चक्षुषा तत्र विद्यमानस्य रजतस्य प्रत्यक्षसम्भवः। न च शुक्त्यंशरजतांशयोरुभयोरेकस्मिन् वस्तुनि विद्यमानत्वे कथं लोके कस्यचित् शुक्त्यात्मनैव, कस्यचित् च रजतात्मनैवाभ्युपगम इति वाच्यम्; यत्र यस्य भूयस्त्वं तस्य तदात्मकतायाः सुग्रहतया तदभ्युपगमस्यौचित्यात्, दोषवशाद् भूयोंऽशकस्याभिभव एवाल्पांशकस्य ग्रहणस्योपगमात्। इदमपि मतमविचारितरमणीयम्।

तथा हि—यद्येकस्मिन् वस्तुनि शुक्त्यंशो रजतांशश्चोभयं वर्तेत, तर्हि सदैव सहैव चोभयोर्ग्रहणं प्रसज्येत। अधिकांशोऽल्पांशग्रहणस्य विरोधीति यदि मन्येत, तदा परमतेन भ्रमप्रयोजकसन्निधानेऽपि तद्ग्रहणं न स्यात्। दोषे हि यद्यधिकांशस्याभिभवस्तदाऽल्पांशग्रहणस्य का नाम प्रत्याशा? यदिन्द्रियं दोषस्यासत्त्वे यमंशं न गृह्णाति, तं दोषकाले ग्रहीष्यतीत्यभ्युपगमस्तु कदाग्रहविजृम्भणमात्रम्।

माध्वास्तु तादृशस्थलेऽभिनवामन्यथाख्यातिं मन्यन्ते। न्यायवैशेषिकसम्मतान्यथाख्यात्यपेक्षया तदीयायामन्यथाख्यातावियमेवाभिनवता यत् तत्र नहि न्यायमत इवान्यत्र सतो रजतादेः शुक्तित्वादिस्थले भानम्, किन्त्वत्यन्तमसतो रजतस्य तत्र भानम्। परमिदमपि मतं न रमणीयम्; अत्यन्तमसतः प्रतीतिगोचरताया अनुपपत्तेः। कथञ्चिदुपपत्तौ च सर्वत्र प्रतीमानस्यासत्त्वाभ्युपगमसम्भवे शून्यवादापत्तेः।

मायावादिनस्तु तादृशस्थलेऽनिर्वचनीयस्य रजतादेर्ज्ञानमभ्युपगच्छन्ति, किन्तु तादृशस्थलीयं रजतादिकमनिर्वचनीयत्वेन सत्यतयाऽभ्युपगम्यमानरजतादिना तुल्यमपि प्रतीतिसमायुष्कतया तूलाविद्योपादानकतया च व्यवहाराक्षमम्। तादृशस्याभ्युपगमश्च 'इदं रजतम्' इत्यादिप्रतीतेरन्यथाऽनुपपत्त्याऽपरिहार्यः, अन्यथा तत्र रजतादेरविद्यमानत्वेऽङ्गुल्यादिनिर्देशेन तत्प्रतीतेरनुपपत्तेः। परमिदमपि मतं न युक्तिसहम्, शुक्त्यादिस्थले रजतकारणानां रजतावयवानामसत्त्वेन रजतोत्पत्तेरसम्भवात्। न च रजतावयवा न प्रातिभासिकरजतस्य हेतवः, किन्तु व्यावहारिकरजतस्यैवेति वक्तुं सुकरम्; अवयवनैरपेक्ष्येण तूलाविद्यायाः कार्यजनकत्वे ततो बलिष्ठाया मूलाविद्याया व्यावहारिककार्यजनने अवयवापेक्षाया अयौक्तिकत्वात्। किञ्च, रजतादिसंस्कारोद्बोधस्य पुरोवर्तिनो विशेषधर्मानवबोधस्य पुरोवर्तीन्द्रियसन्निकर्षस्य पुरो-

वर्तिनि रजतादिभेदाग्रहाभावस्य चानिर्वचनीयख्यातिपक्षेऽप्यवश्यमभ्युपेतया तन्मात्रैरेव प्रतीतेरुपपत्तिसम्भवेन तत्र विषयस्य प्रतिभासमात्रकालिकस्योत्पत्तेरनौचित्यात्। अत उक्तानां सर्वविधानां भ्रमस्थलीयख्यातीनां तत्तद्दोषसंस्पृष्टतयाऽन्यख्यातिरविदुषाम्, अख्यातिश्च विदुषां योगिनामिति शुद्धाद्वैतसिद्धान्त एव युक्तियुक्ततया प्रमाणपरिपुष्टतया च ग्राह्यः।

अत्रायं निगर्वनिष्कर्षः—शुद्धाद्वैतमते मनस्संयुक्तस्य चक्षुषः शुक्त्यादिभिः सह संयोगे प्राक् सामान्यज्ञानं जायते। तत उद्भूतसत्त्वगुणया बुद्ध्या प्रमात्मकं ज्ञानम्। मायाख्यया भागवत्या शक्त्योद्भावितमोगुणया च बुद्ध्या संशयादिरूपमनेकविधाप्रमात्मकं ज्ञानमुत्पद्यते। तत्र भ्रमस्थले मायामोहिता समुद्रिक्ततमोगुणा बुद्धिर्बलवत्तरस्य रजतसंस्कारस्य तदुद्बोधकस्य चाकचक्याद्यात्मकसादृश्यदर्शनस्य च सहकारेण रजतं प्रसूते। तदेव बुद्धिप्रसूतं रजतं भ्रमात्मकज्ञानेनान्यख्यातिशब्दव्यपदेश्येन विषयीक्रियते। तत्रेन्द्रियार्थसंयोगेन जायमाने सामान्यज्ञानेऽवभासमानं रजतं वास्तवम्। तदुत्तरं जायमानं मायामूलके विशेषज्ञाने भासमानं रजतं च कल्पितम्। यथोक्तम्—"अनुमितिमन्तरा त्वयि विभाति मृषैकरसे" इत्यादिषु सुबोधिन्याम्। रजतं तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते। तत्र सा बुद्धिरेव कारणम्। इन्द्रियार्थयोर्मध्ये यद्भाति तन्मृषा, तदित्थं भ्रमस्थलीयं विशेषज्ञानं वास्तवादिन्द्रियग्रहणार्हाद् रजतादेरन्यस्य बुद्धिकल्पितस्य रजतादेः ख्यापकत्वादन्यख्यातिर्बुद्धिवृत्तिरूपादिविपर्यासशब्दवाच्या। तादृश्या ख्यात्या च विषयीक्रियमाणं सर्वं वस्तु मायिकं मिथ्या च। इन्द्रियैर्गृह्यमाणो बुद्ध्या अप्रसूतो मायाख्यशक्तिसहकृतस्य परमात्मनः परिणामभूतः समग्रो दृश्यमानो जडात्मकः पदार्थराशिर्वास्तवो भगवतः सदंशश्च।

अत एव जडस्य प्रकाशः सेन्द्रियमनोवृत्त्यादिसापेक्षो भवति। रजोव्यापारेण तमोपनयने सति सत्त्वमहिम्ना वस्तुप्रकाशः। अतः शुद्धाद्वैतवेदान्तरीत्या संसारस्य मायिकत्वेऽपि प्रपञ्चस्य ब्रह्मकार्यत्वेन ब्रह्मात्मकतैव। इत्थं च ये पूर्णयोगिनो निष्कल्मषा अधिगतपदार्थसार्थयाथार्थ्या विद्वांसस्तेषामख्यातिरेव, अर्थादन्यख्यात्यात्मकविभ्रमाभाव एव सर्वदाऽवद्योतते। ये च मायामोहितमतयोऽल्पविदो मानवास्तेषां बुद्धेस्तमोगुणस्य मायया प्राबल्ये सति तदानीं बुद्धेः सकाशाल्लब्धजन्मनो वास्तवरजतादितोऽन्यस्य नवीनस्यैव ज्ञानात्मिकाऽन्यख्यातिरेवेति सुधीभिर्विभावनीयम्॥

# मायास्वरूपमध्यासविमर्शश्च

श्रीगिरधारी भट्टराई, श्रीविश्वनाथगुरुकुलसंस्कृतमहाविद्यालयः, कर्णघण्टा, वाराणसी ।

अस्ति हि भारतीयसमस्ताऽऽस्तिकदर्शनशिरोमणिभूताऽद्वैतवेदान्तसिद्धान्तसम्मता माया नाम काचित् । सा च शुद्धचैतन्यमेव विषयीकृत्य तदाश्रयते, यथा रज्ज्ववच्छिन्नचैतन्याज्ञानं रज्ज्ववच्छिन्नचैतन्यं विषयीकुर्वद् रज्ज्ववच्छिन्नचैतन्यमेवाश्रयते । अहङ्काराध्यासात् प्रागेव सिद्धाया मायाया न मायानन्तरभाव्यहङ्कारस्तदुपहितचैतन्यं वाऽऽश्रयो विषयश्च । उक्तं च संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ इति ।

माया हि ब्रह्मचैतन्याद् न वस्तुतो भेदवती, ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वप्रतिपादनात्, "नेह नानाऽस्ति किञ्चन" इत्यादिश्रुतिविरोधेन वस्तुतो मायाया ब्रह्मचैतन्याद् भेदासम्भवात् । नाप्यभिन्ना, चैतन्यजडयोरैक्यायोगात् ; नापि चैतन्याद् भिन्नाभिन्ना, एकत्र भिन्नत्वाभिन्नत्वयोर्विरोधेनासम्भवात् । एवं तावद् माया न सती, अद्वैतश्रुतिविरोधात् ; नाप्यसती, भूतप्रकृतित्वानुपपत्तेः; नापि सदसती, सत्त्वासत्त्वयोरेकत्र विरोधात् । एवं तावद् माया नावयववती, एवं सति मायायाः सादित्वप्रसङ्गेन मायाप्रतिबिम्बभूतेश्वरस्यापि सादित्वप्रसङ्गात् । मायायाः सादित्वे मायाप्रकृतित्वेन मायान्तरापेक्षायामनवस्थाप्रसङ्गाच्च । नापि निरवयवा, तथा सति भूतप्रकृतित्वाभावप्रसङ्गात् । सावयवपदार्थानामेव लोके प्रकृतित्वदर्शनात् । नाप्युभयरूपा, सावयवत्वनिरवयवत्वयोरेकत्र विरोधात् । तस्मात् सर्वप्रकारेण मायाया निर्वक्तुमशक्यतया माया अनिर्वाच्या स्वीकरणीया ।

अस्ति च मायायाः शक्तिद्वयम्—आवरणशक्तिर्विक्षेपशक्तिश्च । यथा शुक्त्याद्यवच्छिन्नचैतन्याज्ञानमावरणशक्त्या शुक्त्याद्यवच्छिन्नचैतन्यमावृत्य विक्षेपशक्त्या रजतादिकमुद्भावयति, तथा मायाऽप्यावरणशक्त्या संस्फुरच्छुद्धचैतन्यमावृत्य विक्षेपशक्त्या जीवेश्वरादिभेदं कल्पयति । उक्तञ्च संक्षेपशारीरके—

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन ॥ इति ।

न च मायाया आवरणशक्तौ मानाभाव इति वाच्यम्, ब्रह्मस्वरूपानवभासानुपपत्तेरेव तत्र मानत्वात्। न चान्यथोपपत्तिः, तत्र न तावदिदानीं प्रतीचो ब्रह्मभावाभावादनवभासः, "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुत्या ब्रह्मभावस्य सत्त्वात्। नापि तद्विषयप्रमाणाभावादनवभासः, स्वयम्प्रकाशस्य तस्यागन्तुकप्रमाणानपेक्षत्वात्। नापि विद्यमानस्यापि तस्य केनचिद् मूर्तद्रव्येणाऽऽवृतत्वादनवभासः, अत्यन्तमव्यवहितस्य तस्याऽऽवृतत्वानुपपत्तेः। तस्माद् मायैवावरणशक्त्या ब्रह्मचैतन्यमावृणोति।

माया, अविद्या, अज्ञानम्, अजा, तमः, शक्तिः, प्रधानम्, अव्यक्तम्, प्रकृतिरिति चानर्थान्तरम्। "मायां तु प्रकृतिं विद्यात्, योगी मायाममेयाय, माययाऽपहृतज्ञानाः, मायामेतां तरन्ति ते, इन्द्रो मायाभिः पुरुरूप ईयते, मम माया दुरत्यया, भूयश्चान्ते विश्वमायानिवृत्तिः, अविद्यायामन्तरे वर्तमानाः, क्षरं त्वविद्या ह्यमृतं तु विद्या, अज्ञानेनाऽऽवृतं ज्ञानम्, तस्मादज्ञानसम्भूतम्, अजामेकां लोहितशुक्लकृष्णाम्, जय जय जह्यजामजितदोषगृभीतगुणाम्, अन्धेन तमसावृताः, अन्धं तमः प्रविशन्ति, तमसो मा ज्योतिर्गमय, देवाऽऽत्मशक्तिं स्वगुणैर्निगूढाम्, पराऽस्य शक्तिर्विविधैव श्रूयते, क्षरं प्रधानममृताक्षरं हरः, प्रधानजैः स्वभावतो देव एकः, प्रधान क्षेत्रज्ञपतिर्गुणेशः, महतोऽव्यक्तमुत्तमम्, अव्यक्तात्तु परः पुरुषः, प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः, प्रकृतेर्गुणसम्मूढाः, प्रकृतिं स्वामधिष्ठाय, मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्, प्रकृतिं पुरुषश्चैव विद्ध्यनादी उभावपि, पुरुषः प्रकृतिस्थो हि प्रकृतिं च गुणैः सह, प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः, गुणाः प्रकृतिसम्भवाः" इत्यादिश्रुतिस्मृतिपुराणादिवाक्यैर्मायाऽपरपर्यायाणामविद्यादीनां प्रतिपादनात्। अत एव तत्तदाचार्यैस्तत्तल्लक्षणं कृतम्। तथाहि वेदान्तसारे श्रीसदानन्दस्वामिना—'सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित्" इत्यज्ञानलक्षणं कृतम्। तथैव चित्सुखाचार्यैः—

अनादि भावरूपं यद् विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते ॥

इत्यनया कारिकयाज्ञानस्यैव लक्षणं कृतम्। अद्वैतसिद्धिकारास्तु—"अथ केय-

मविद्या ?" इत्युपक्रम्य अनादित्वे सति भावत्वे सति ज्ञाननिवर्त्यत्वम्, भ्रमोपादानत्वं वा" इत्येवंप्रकारेणाविद्याया लक्षणं कृतम्।

अथाविद्यायां प्रत्यक्षादिप्रमाणासत्त्वेन नाद्वैतवेदान्तसिद्धान्तसम्मताऽविद्येति मा शङ्कनीयम्, तत्र प्रत्यक्षादिप्रमाणानां सद्भावात्। तथाहि—"अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षम्, त्वदुक्तमर्थं न जानामीति विशेषतः प्रत्यक्षम्, एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम्" इति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रत्यक्षप्रमाणवादिनः प्रति तत्र प्रमाणम्। विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठ-प्रमाऽभावातिरिक्तानादेर्निवर्तकम्, प्रमाणत्वात्, यज्ञदत्तादिगतप्रमाणज्ञानवदित्याद्य-नुमानं तार्किकम्मन्यान् नैयायिकान् प्रति प्रमाणम्। 'त्वदुक्तमर्थं न जानामि' इति व्यवहारान्यथानुपपत्तिः जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिश्च भाव-रूपाऽविद्यासत्त्वेऽर्थापत्तिप्रमाणवादिनः प्रति प्रमाणम्, श्रुत्यादिशब्दप्रमाणवादिनः प्रति तु पूर्वोक्तानि "मायां तु प्रकृतिं विद्यात्" इत्यादीनि श्रुत्यादिवाक्यान्येव प्रमाणम्।

एवं लक्षणप्रमाणाभ्यां निस्पादिताऽविद्यैवाहङ्कारादिसर्वप्रपञ्चस्योपादानम्। तथैवाविद्यया ब्रह्मणि प्रपञ्चाध्यासः। यथाऽसर्पभूतायां रज्जौ रज्ज्ववच्छिन्नचैतन्या-विद्यया सर्पाध्यासः। अध्यासो नाम अतस्मिन् तद्बुद्धिः। अध्यासः, भ्रमः, आरोपः, अध्यारोपः, अवभास इति चानर्थान्तरम्।

सामान्यतोऽध्यासो द्विविधः—स्वरूपाध्यासः संसर्गाध्यासश्च। यत्रानिर्वच-नीयपदार्थस्योत्पत्तिस्तत्र स्वरूपाध्यासः। यथा—शुक्तौ रजतस्य स्वरूपाध्यासः, यथा वाऽऽत्मन्यहङ्कारादीनां स्वरूपाध्यासः। यत्र तु पदार्थः सिद्ध एव, किन्तु द्वयोः संसर्गः कल्पितस्तत्र स संसर्गाध्यासः। यथा मुखदर्पणयोः सिद्धत्वेन मुखदर्पणयोः संसर्गः कल्पितः, स संसर्गाध्यासः। तथैवानात्मनि नात्माध्यासश्चैतन्यस्य पारमार्थिकत्वात्, किन्त्वनात्मन्यात्मनस्तादात्म्याध्यासः। स च संसर्गाध्यासः। मायाया अद्भुतत्वेन चात्मनि इन्द्रियारोपो न भवति। अत एव अहं नेत्रमिति व्यवहाराभावः। अहं बधिर इत्यादिव्यवहाराच्च बधिरत्वारोपो भवति, अयञ्च धर्माध्यासः! भ्रमस्थले शुक्ताविदं रजतमिति निश्चयो न निर्विषयः, निर्विषयस्य प्रत्यक्षत्वे प्रमाणाभावात्। रजतमेव च विषयो वाच्यः। तस्य च मिथ्यात्वम्, सत्यत्वे बाध्यत्वाभावात्। न च भ्रमविषयी-

भूतं रजतमसदेवास्त्विति वाच्यम्, रजतस्यासत्वे तज्ज्ञानस्य प्रत्यक्षत्वासंभवात्। नहि शशशृङ्गं साक्षात्करोमीति कस्यचिदनुभवः। न चेदं रजतमित्यनुरोधेन भ्रमविषयीभूतस्य रजतस्य सत्यत्वं स्यादिति वाच्यम्, सत्यत्वे बाध्यत्वाभावप्रसङ्गात्। तस्माद् भ्रमस्थले शुक्तावनिर्वचनीयं रजतमुत्पद्यते। न च तत्र रजतोत्पादकसामग्र्यभाव इति वाच्यम्, सत्यरजतोत्पादकसामग्रीसदृशसामग्र्यभावेऽपि विलक्षणस्याज्ञानस्योपादानस्य दोषसहितस्य चक्षुषो रजतसंस्कारस्य च निमित्तकारणस्य विद्यमानत्वात्।

भ्रमविषये वादिनो विवदन्ते—शून्यवादिनोऽसत्ख्यातिमङ्गीकुर्वन्ति। तेषां मतेऽधिष्ठानमसत्, प्रमाणप्रमेयप्रमात्रादिकं सर्वमसत्. असदधिष्ठानेऽसतो रजतस्य प्रतीतिरिति, तन्न; असदधिष्ठाने भ्रमस्यैवानुत्पत्तेः, असत्ख्यातौ प्रमाणाभावाच्च। न चासद्भानेऽसदेव रजतमभादिति प्रत्यक्षं मानम्, नेदं रजतमित्यनन्तरोक्तबाधानुपपत्तेः, तदादित्सया प्रवृत्त्यनुपपत्तेश्च।

योगाचारमतानुयायिनो भ्रमविषये आत्मख्यातिं स्वीकुर्वन्ति। क्षणिकविज्ञानवादिनस्ते हि विज्ञानमेवात्मा, बाह्यपदार्थो नास्ति, बाह्यपदार्थस्य विज्ञानधर्मत्वादान्तरत्वम्, आन्तररजतादेर्विज्ञानस्वरूपाऽऽत्माऽधिष्ठानम्, तथा चेदं रजतमिति प्रतीतौ चान्तरं रजतमेव बाह्यतया प्रतीयते, नेदं रजतमिति प्रतीतौ रजतादेर्न बाधः, आन्तररजतसत्ताया आवश्यकत्वात्, किन्त्विदन्तारूपबाह्यताया बाधः, आन्तररजतं सत्यमेव। तस्य बाह्यदेहो प्रतीतिर्भ्रमः। अतो रजतज्ञाने रजतविषयकत्वांशो न भ्रमः, किन्तु रजतांशे बाह्यदेशस्थत्वस्य भ्रम इति। तत्तुच्छम्; अत्यन्तालीकाया अपि बाह्यतायाः प्रतिभासवद् अत्यन्तासतोऽपि रजतादेः प्रतिभासोपपत्तेः। न च नेदं रजतमितीदन्तामात्रं बाध्यते, कल्पनालाघवादिति वाच्यम्; इदं रजतमिति प्रतिपन्नविशिष्टस्य नेदं रजतमिति बाधस्य चानुभवसिद्धतया कल्पनीयत्वाभावात्। किञ्चारोपितं बुद्धौ चेद् गुञ्जापुञ्जादौ दहनसमारोपे देहदाहप्रसङ्गः। बुद्धावपि तस्यातात्त्विकत्वान्न देहदाहप्रसङ्ग इति चेत्तर्हि न तद्बहिः सत्, नान्तः सदित्यनिर्वचनीयं स्याद् गत्यन्तराभावादित्येव वक्तव्यं स्यात्!

अख्यातिवादिनो हि प्राभाकरा इत्थं वदन्ति—इदं रजतमित्यादिस्थले ज्ञानद्वयम्, इदमिति प्रत्यक्षम्, रजतमिति स्मरणम्। तथा च द्वयोर्यथार्थत्वाद् भ्रमात्मकं ज्ञानं नास्ति। विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात् सम्प्रतिपन्नवदित्यनुमानेन सर्वज्ञानानां यथार्थत्वम्। पुरोवर्तिपदार्थस्य सामान्यतः प्रत्यक्षस्य रजतस्य स्मृतेश्च भेदज्ञानं प्रवृत्तौ प्रतिबन्धकम्, भेदज्ञानाभावस्तत्र कारणम्, सत्यरजतस्थले तु रजतत्वविशिष्टरजतज्ञानं प्रवृत्तौ कारणम्। केचित्तु शुक्तिरजतस्थले तादात्म्येन रजतस्य समवायेन रजतत्वस्य वाऽसंसर्गाग्रहः कारणमित्याहुः। तथा च शुक्तिरजतस्थले भेदाग्रहोऽसंसर्गाग्रहो वा कारणम्। सत्यरजतस्थले विशिष्टज्ञानं कारणमिति, तन्न युक्तम्, सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात्, रङ्गगोचररजतार्थिप्रवृत्तावपि विशिष्टज्ञानहेतुत्वकल्पनात्। न च संवादिप्रवृत्तौ विशिष्टज्ञानं कारणं विसंवादिप्रवृत्तौ च भेदाग्रहोऽसंसर्गाग्रहो वा कारणमिति वाच्यम्, कारणद्वयकल्पने गौरवाल्लाघवेन प्रवृत्तिमात्रे विशिष्टज्ञानस्य हेतुत्वकल्पनात्। यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र प्रवृत्तिनिवृत्त्यापत्तेश्च, दोषात्तत्र रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च विद्यमानत्वात्। किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं करणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। सेयमुभतः पाशारज्जुः।

अपि चाख्यातिवादिना विगीताः प्रत्यया यथार्था ज्ञानत्वात् सम्प्रतिपन्नवदित्याद्यनुमानेन भ्रमे यथार्थत्वं साधयितुमभिलषता विभ्रमाङ्गीकारेऽपसिद्धान्तः, तदनङ्गीकारे आश्रयासिद्धिर्निवारयितुं नैव शक्यते। उक्तं च चित्सुखाचार्यैः—

स्वीकारे विभ्रमाणां स्यात् स्वीयसिद्धान्तबाधना।
अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धृता ॥ इति।

अन्यथाख्यातिवादिनस्तु नैयायिका इत्थं कथयन्ति—यस्य पुंसो यत्पदार्थानुभवजन्यसंस्कारोऽस्ति, तस्य पुंसः सदोषचक्षुषः पूर्वदृष्टपदार्थसदृशपदार्थेन संसर्गः, पुरोवर्त्तिसामान्यज्ञानम्, पूर्वदृष्टस्मरणम्, स्मृतिविषयीभूतरजतत्वस्य समवायेन तादात्म्येन रजतस्य वा प्रतीतिरिति। तन्न सम्यक्; किं देशान्तवृत्तिरजतमसन्निकृष्टं रजते भासत इत्यभिमतं सन्निकृष्टं वा ? नाद्यः, सन्निकर्षाभावे तद्घटितप्रत्यक्षसामग्रीविरहात्, विशेष्यसन्निकर्षवद् विशेषणसन्निकर्षस्यापि प्रत्यक्षे हेतुत्वात्. अन्यथा

व्यवहितदण्डे पुंसि दण्डीति विशिष्टप्रत्यक्षत्वापत्तेः; द्वितीयेऽपि किमिन्द्रियस्य रजतेन साकं लौकिकः सन्निकर्षोऽलौकिको वा ? नाद्यः, इन्द्रियस्य तेन संयोगसंयुक्तसमवायादेरभावात्। अलौकिकश्च सामान्यप्रत्यासत्तिः, उत ज्ञानम् ? नाद्यः, सन्निकृष्टसामान्यस्यैव प्रत्यासत्तित्वाभ्युपगमात्। इन्द्रियसंयुक्ते पुरोवर्तिनि रजतत्वस्याभावेनासन्निकृष्टत्वात्। न द्वितीयः, ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानोच्छेदापत्तेः ॥ इति शम् ॥



# मायास्वरूपविमर्शः

श्रीरामनारायणदीक्षितः, दक्षिणामूर्तिसंस्कृतविद्यालयः, वाराणसी ।

अथातो मायायाः स्वरूपं विमृश्यते । यतो मायामद्वैतवादिनो विश्वप्रकृतित्वेनाभ्युपगच्छन्ति, अत एव जगतोऽपि तस्याः कार्यस्य मायामयत्वं मिथ्यात्वञ्च वदन्ति । शून्यवादिनो बौद्धा अपि जगतः सर्वात्मनाऽसत्त्वरूपत्वं शून्यत्वञ्च ब्रुवते । तत्र "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतौ मायामित्येकवचनदर्शनेन मायाया एकत्वं निश्चीयते । यद्यपि "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतिषु बहुवचननिर्देशाद् मायाया बहुत्वमपि प्रतीयते; तथापि लाघवात् तस्या एकत्वमेव । बहुवचनं तु मायागतशक्तिबहुत्वानुरोधेन तद्गुणबहुत्वानुरोधेन वाऽभ्युपेयम् । माया चात्मनोऽव्यक्तशक्तिः सत्त्वरजस्तमोगुणात्मिका सत्त्वासत्त्वाभ्यामात्मनो भिन्नत्वाभिन्नत्वाभ्यां चानिर्वाच्या । उक्तञ्च—

अव्यक्तनारी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या ।
कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते ।।
सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा ।।

सा चैषा तुच्छा, अनिर्वचनीया, वास्तवी चेति दृष्टिभेदेन त्रिधाऽपि भिद्यते ।

तदुक्तम्—

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ।। इति ।

मायायास्त्रिगुणत्वञ्च श्रुतावपि श्रुतम्—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।।

अत्र 'अजाम्' इत्यनेनास्या अनादित्वं सूच्यते, एकामित्यनेन बहुत्वनिरासः, लोहितकृष्णशुक्लामित्यनेन रजःसत्त्वतमोगुणात्मकत्वं च व्यज्यते । 'स्वरूपा' इत्यनेन

मायाकार्याणामपि त्रिगुणात्मकत्वं बोध्यते । मायाया आत्मशक्तिरूपत्वं दुर्गासप्तशत्यामप्युक्तम्—

"देव्या यया ततमिदं जगदात्मशक्त्या" इति ।

यया देव्या स्वप्रकाशचित्सम्बन्धेन चित्स्वभावया कारणभूतया इदं जगत् ततम्=व्याप्तम्, अनुगतमिति यावत् । एतच्चोक्तं तत्रैव ब्रह्मस्तुतौ—

यच्च किञ्चित् क्वचिद्वापि सदसद् वाऽखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ इति ।

अत एव एषैव देवी भागवते नानाविधदेवीस्वरूपतया नानाविधाऽद्भुतावदानादुपवर्णिता, एषा च मा याति बुद्धिगोचरतां ययाऽऽवृतमात्मतत्त्वं सा मायापदेनोच्यते । अत्र निषेधार्थको माशब्दः, याऽस्मिन् पदे 'या'धातोः करणे क्विब् बाहुलकात् । प्रक्रियते यया जगदिति जगत्कारणत्वेन प्रकृतिपदेनाप्यभिधीयते । एषा चावरणविक्षेपरूपशक्तिद्वयवती, तत्रावरणशक्त्याऽऽत्मानमावृणोति, विक्षेपशक्त्या च जगत्सृजति; एवं शक्तिद्वयस्य दृग्दृश्यविवेके निर्देशः कृतः—

शक्तिद्वयं हि मायाया विक्षेपाकृतिरूपकम् ।
विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत् ॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥ इति ।

इयं च मायाऽऽत्मविद्याविरोधित्वादविद्यापदेनापि शास्त्रेषूदीर्यते । क्वचित्तु मायाविद्ययोर्भेदोऽपि दृश्यते, तदुक्तं पञ्चदश्याम्—

"सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च द्वे मते" इति ।

शुद्धसत्त्वप्रधाना माया ईश्वरोपाधिः, मलिनसत्त्वप्रधाना अविद्या जीवोपाधिरिति तदभिप्रायः । केचित्तु मायाऽविद्ययोर्भेदमभ्युपगच्छन्ति । तथाहि—"आश्रयमव्यामोहयन्ती कर्तुरिच्छामनुसरन्ती माया, तद्विपरीता त्वविद्या" इति । लोकेऽपि मायानिर्मितहस्त्यश्वरथादौ मायाशब्द एव प्रसिद्ध इति लक्षणप्रसिद्धिभ्यां मायाऽविद्ययोर्भेदोऽप्युपपद्यत इति तदसत्; यतोऽनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्ययावभासहेतुत्वं लक्षणम्, एतच्च मायाऽविद्ययोरुभयोरपि समानम् । लोकेऽपि द्रष्टारो दृष्टमिन्द्रजालमेव मायां वदन्ति, न त्वदृष्टं मन्त्रादिकम् । न चायमपि नियमो यन्माया स्वाश्रयं

न व्यामोहयति; यतो रामावतारे भगवतो विष्णोः स्वाश्रितमाययैव विमोहितत्वात्। उक्तं च—

"असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय" इति।

अविद्यापि स्वाश्रयं व्यामोहयत्येवेत्यपि न नियमः, यतो जलमध्येऽधोमुखत्वेनाध्यस्यमानेष्वपि वृक्षादिषु तदूर्ध्वमुखतायां द्रष्टुरव्यामोहात्। भगवती श्रुतिरपि मायाऽविद्ययोरेकत्वमेव द्योतयति। तथाहि—"भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यत्र सम्यग्ज्ञाननिवर्त्याविद्यायामेव मायाशब्दप्रयोगात्। तथा च—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै विद्यात्मने नमः॥ इति।

स्मृतिरपि मायाऽविद्ययोरभेदमेव गमयति। लोके तयोर्भेदप्रसिद्धिस्त्वेकस्मिन्नपि वस्तुन्युपाधिभेदादप्युपपद्यते। तदुक्तं विवरणे—विरूपजनकत्वाकारेण इच्छाधीनत्वाकारेण माया इति व्यवहारः। आवरणाकारेण स्वातन्त्र्याकारेण वा 'अविद्या' इति व्यवहारः, एवं च माया, अविद्या, अज्ञानं चेत्यनर्थान्तरमेव। इयं च मायाऽनिर्वचनीया; यतो नापि सती बाध्यमानत्वात्, नाप्यसती प्रतीयमानत्वात्, नापि सदसदुभयात्मिका परस्परविरोधात्। यतः परस्परविरोधे हि न प्रकारान्तरस्थितिरिति नियमात्। अतः केनचित् कथञ्चिदपि माया ज्ञातुमशक्या। उक्तं च वेदान्तसिद्धान्तमुक्तावल्याम्—

अज्ञानं ज्ञातुमिच्छेद् यो मानेनात्यन्तमूढधीः।
स तु नूनं तमः पश्येद् दीपेनोत्तमतेजसा॥

ननु यदीयं माया सर्वथा ज्ञातुमशक्या चेत् तर्ह्यस्याः सत्तैव न स्वीक्रियताम्, अत आह—त्रिगुणात्मिकामिति। माया चानादित्वे सति भावरूपा, यत्किञ्चित् प्रतीतेः। उक्तं च तल्लक्षणं चित्सुखाचार्यैस्तत्त्वप्रदीपिकायाम्—

अनादि भावरूपं यद् विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते॥

एवं चानादिभावत्वे सति ज्ञाननिवर्त्यमज्ञानमिति निष्कृष्टं लक्षणं पर्यवस्यति। न चात्र लक्षणेऽव्याप्तिः; सर्वेष्वप्यज्ञानेषूक्तरूपत्रयस्यानुगमात्। नाप्यतिव्याप्तिः; अनादिसिद्धस्य भावरूपस्यात्मनो निवर्त्यत्वाभावेन ज्ञाननिवर्त्यत्वस्याप्यभावात्।

नापि परमाणौ तद्गतश्यामत्वादौ चातिप्रसक्तिः, तत्स्वरूपानङ्गीकारात्। नाप्यसम्भवी; यतो भावाभावविलक्षणेऽज्ञानेऽभाववैलक्षण्येन भावत्वं केवलमौपचारिकम्। अतोऽविद्या अनिवर्त्या, अनादित्वे सति भावत्वात्, आत्मवदित्यनुमानेनास्यानिवर्त्यत्वमपि नोपपादयितुं शक्यते। "एवं च अहमज्ञः, मामन्यञ्च न जानामि" इत्यपरोक्षानुभव एव भावरूपाज्ञाने प्रमाणम्। यद्यप्यत्र प्रत्यक्षप्रमाणम्, तथापि प्रत्यक्षेणाकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति सिद्धान्तानुसारेणानुमानैकरुचिं प्रत्यनुमानं प्रमाणमपि दर्शितं विवरणे। तथाहि—"विमतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशवत्। एवं च तदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिरपि भावरूपाज्ञाने प्रमाणम्। इदं चाज्ञानं साक्षिसिद्धमेव। नाप्यज्ञानं केवलं प्रत्यक्षादिप्रमाणसिद्धम्; अपि तु छान्दोग्येऽष्टमाध्याये, तद्यथा—"हिरण्यं निधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेव इमाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः"। "इन्द्रो मायाभिः, तम आसीत्" इत्यादिश्रुतयोऽपि प्रमाणम्। इयं च माया न स्वतन्त्ररूपेण स्वयं जगदुत्पादयितुं शक्नोति, नापि केवलः कूटस्थः परमेश्वरोऽपि, तदुक्तं नयनप्रसादिन्याम्—"कूटस्थस्य तस्य वियदादिविकाराभावादविद्यावेशवशाद् विकारे प्राप्ताप्राप्तविवेकेन तस्या एव विकारः।" न च सांख्यसिद्धान्तसंगतेरिह गन्धिता, परमेश्वराध्यस्ताऽनिर्वचनीयाविद्यापरिणामस्य विवर्तापरनाम्नः स्वीकारादीदृशमेव हेतुत्वमभिप्रेत्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिसृष्टिश्रुतयस्तथा "जन्माद्यस्य यतः, प्रकृतिश्च" इत्याद्यधिकरणान्यपि। अत एव धातुसमीक्षायां ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिरभिहितम्—

शुद्धतत्त्वप्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः॥ इति।

एतदभिप्रायेणैव सुरेश्वराचार्यैरपि मानसोल्लासेऽभिहितम्—

सर्वोऽपि व्यवहारोऽयं मायायाः परिजृम्भणम्।
सुषुप्तिसदृशी माया स्वप्रबोधेन शाम्यति॥

एवं श्रीमद्भागवत्पुराणेऽपि मायाया हेतुत्वं वर्णितम्—

एको नारायणो देवः पूर्वं सृष्टं स्वमायया।
संहृत्य कालकलया कल्पान्त इदमीश्वरः॥
केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम्।
संमोहयन् सृजत्यादौ तया सूत्रमरिन्दम॥
तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतो मुखम्।
यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान्॥
यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः।
तथा विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः॥

इदमज्ञानमेकमपि सद् लोके समष्टिव्यष्ट्यभिप्रायेणानेकमपि व्यपदिश्यते, एतदभिप्रायेणैव समष्ट्युपहितं चैतन्यमीश्वरः, व्यष्ट्युपहितं चैतन्यं प्राज्ञो जीव इति चोच्यते। उक्तं च—

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।

एवं विवरणाचार्याणां मतेऽस्या मायाया आश्रयस्तु शुद्धं ब्रह्मैव, न तु जीवः। उक्तं च संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥

मायापि प्रतिबिम्बभूते जीवे एव संसारं जनयति, न तु बिम्बभूते ब्रह्मणि, उपाधेः प्रतिबिम्बपक्षपातित्वात्। उक्तं च लघुचन्द्रिकायाम्—यथा मलिनदर्पणो मालिन्यं स्वान्तर्गतं प्रतिबिम्बे एव जनयति, न तु बिम्बे; तथाऽविद्यापि जीवं प्रत्येवावृणोति, आवरणप्रयुक्तं मनआदिकार्यं च जीव एव जनयतीति भावः।

ननु शुद्धं चैतन्यं कथमज्ञानाश्रयः, तस्य स्वयंप्रकाशरूपत्वात्; तथा परस्परं तमःप्रकाशवद् विरुद्धस्वभावत्वादिति चेन्न; यतोऽज्ञानविरोधि ज्ञानं न चैतन्यमात्रमेव, किन्तु वृत्तिप्रतिबिम्बितम्, तच्च नाज्ञानाश्रयः, यच्चाविद्याश्रयस्तन्नाज्ञानविरोधि, यथा लोके सूर्यः स्वतस्तृणादेर्भासकोऽपि सन् सूर्यकान्तमण्यवच्छेदेन तद्दाहकोऽपि भवति। वाचस्पतिमिश्रमते तु जीवाश्रितैवाविद्या, तथोभयोरनादित्वाद् नान्योन्याश्रयता। उक्तं च भामत्याम्—"कार्यकारणाऽविद्याद्वयाधारोऽहंकारास्पदं

संसारी सर्वानर्थसंभारभाजनं जीवात्मा इतरेतराध्यासोपादानः, तदुपादानश्चाध्यास इत्यनादित्वाद् बीजाङ्कुरवद् नेतरेतराश्रयत्वम्" इति। इयं च माया यथा स्वप्रकाशभूतमात्मानमावृणोति, न तथाऽनात्मानं घटादिकं परप्रकाश्यम्, प्रमाणप्रयोजनयोरभावात्। यतः स्वतः प्रसक्तस्य प्रकाशस्य प्रतिबन्ध एवावरणस्य प्रयोजनम्, न चानात्मनि स्वतः प्रकाशप्रसक्तिः, न चानात्मनामनावृतत्वे सति सर्वदा घटादिमात्रप्रसक्तिः, जडत्वात्। न च मायायां किमप्यसम्भाव्यं स्वप्ने स्वशिरश्छेदादिकं दर्शयति, शास्त्रे मायाया इन्द्रजालपदस्यापि प्रयोगो दृश्यते, तथाहि—

एतस्मात् किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तपकदप्रोद्भूतनानाङ्कुरम्।
पर्यायेण शिशुत्वयौवनजरावेशैरनेकैर्वृतं
पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति॥
देहवद् वटधानादौ सुविचार्य विलोक्यताम्।
क्व धाना कुत्र वा वृक्षस्तस्माद् मायेति निश्चिनु॥
कूटस्थमनुपद्रुत्य करोति जगदादिकम्।
दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः॥
द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि।
मायायां दुर्घटत्वं च स्वतः सिध्यति नान्यतः॥
विस्मयैकशरीराया मायायाश्चोद्यरूपतः।
अन्वेष्य परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः॥
अविद्याया अविद्यात्वमिदमेवात्र लक्षणम्।
यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत्॥

न चाविचारितरमणीयाया अस्या अविद्याया आत्मानमाच्छादयितुमसामर्थ्यं शङ्क्यम्, यतः—

अहो धाष्ट्यमविद्याया न कश्चिदतिवर्तते।
प्रमाणं वस्त्वनावृत्य परमात्मनि तिष्ठति॥

इयं च माया स्वभासकचैतन्यं स्वप्रकाशरूपमन्तरेण न प्रकाशते, अतः परतन्त्रा। असङ्गं नित्यं शुद्धं चिदात्मानमन्यथा करोति, अतः स्वतन्त्रापि। उक्तं च पञ्चदश्याम्—

अस्वतन्त्रा हि माया सा अप्रतीतेर्विना चितिम् ।
स्वतन्त्रापि तथैव स्यादसङ्गस्यान्यथाकृतेः ॥

एवं मायास्वरूपं सुरेश्वराचार्यैरपि मानसोल्लासे वर्णितम्, तथाहि—

युक्तिहीनप्रकाशस्य संज्ञा मायेति कथ्यते ।
नासती दृश्यमाना सा बाध्यमाना न वा सती ॥
न प्रकाशादियं भिन्ना छायेवार्कस्य तामसी ।
न चाभिन्ना जडत्वेन विरोधान्नोभयात्मिका ॥
स्वहेत्ववयवाभावाद् नेयं सावयवोच्यते ।
न चावयवहीना सा कार्येष्ववयवान्विता ॥
अविचारितसिद्धेयं माया वेश्या विलासिनी ।
पुरुषं वञ्चयत्येव मिथ्याभूतैः स्वविभ्रमैः ॥

अस्याश्च मायायाः कार्यं भ्रान्तिरूपमज्ञानमध्यासः, मायाया अनिर्वाच्यत्वात् । सोऽप्यनिर्वचनीय एव, यथा देहेन्द्रियादौ आत्मविभ्रमः । स च प्रवाहरूपेण प्रवृत्तोऽनादिरनन्तः । पूर्वपूर्वमिथ्याज्ञानजनितवासना चोत्तरोत्तरविभ्रमस्योपादानं कारणम्, सैव च वासना तूलाविद्यापदेन व्यवह्रियते सम्प्रदायविद्भिः । अध्यासपदेन च ज्ञानमर्थश्च द्वयमप्युच्यते, तथाहि—'अध्यसनमध्यासः' इति 'अध्यस्यत इत्यध्यासः' इति व्युत्पत्तिद्वयसमाश्रयणात् । प्रागुक्ताऽविद्या युगपदेव ज्ञानाभासरूपाध्यासाऽकारेणाध्यस्यमानतत्तदर्थाकारेण च परिणमत इत्यध्यासद्वयमप्यविद्यायाः परिणामः । आत्मनि मायाया अध्यस्यमानं जगत्त्वात्मनो विवर्तः, मायायास्तु परिणामः । अतात्त्विकोऽन्यथाभावो विवर्तः, तात्त्विकः स तु परिणामः । एवमध्यासलक्षणं शारीरकभाष्येऽपि भगवत्पादैः—"स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यासः" इत्युक्तम् । व्याख्यातं च रत्नप्रभायाम्—अत्र परत्रावभास इत्येव लक्षणम्, शिष्टं पदद्वयं तदुपपादनार्थम् । तथाहि—अवभास्यत इत्यवभासो रजताद्यर्थः, तस्यायोग्यत्वमधिकरणं परत्र पदार्थः । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभावत्वं तद्वत्त्वं वा । तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभास्यत्वमध्यस्तत्वमित्यर्थः । इदं च साधनाद्यध्याससाधारणं लक्षणम् । संयोगेऽतिव्याप्तिनिरासायैकावच्छेदेनेति, संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रा-

वच्छेदकभेदाद् नातिव्याप्तिः। पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिवारणाय स्वसंसृज्यमान इति पदम्। तेन स्वाभावकाले प्रतियोगि-संसर्गस्य विद्यमानतोच्यत इति नातिव्याप्तिः। भूत्वाऽवच्छेदेनावभास्यगन्धेऽति-व्याप्तिवारणाय स्वात्यन्ताभाववतीति पदम्। शुक्तौ इदन्त्वावच्छेदेन रजतसंसर्ग-कालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिरिति। नन्वस्य लक्षणस्यासम्भवः, शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात्। न च स्मर्यमाणसत्यरजतस्यैव परत्र शुक्तावभास्य-त्वेनाध्यस्य तत्त्वोक्तिरिति वाच्यम्; अन्यथाख्यातिप्रसङ्गादित्यत आह—स्मृतिरूपेति। स्मर्यत इति स्मृतिः। सत्यरजतादिस्तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्यमाण-सदृश इत्यर्थः। सादृश्योक्त्या स्मर्यमाणादारोप्यस्य भेदाद् नान्यथाख्यातिरित्युक्तं भवति। सादृश्यमुपपादयति—पूर्वदृष्टेति। दृष्टं दर्शनम्। संस्कारद्वारा पूर्वदर्शना-दवभास्यत इति पूर्वदृष्टावभासः। तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति, स्मृत्यारोपयोः संस्कारजन्यत्वात्। न च संस्कारजन्यत्वारोपस्य स्मृतित्वापत्तिरिति वाच्यम्; दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्र-जन्यत्वाभावात्। अत्र संप्रयोगशब्देनाधिष्ठानसामान्यज्ञानमुच्यते, अहङ्काराध्यास इन्द्रियसंप्रयोगालाभात्। एवं च दोषसंप्रयोगसंस्कारबलात् शुक्त्यादौ रजतमुत्पन्न-मस्तीति परत्रावभास्यत्वे लक्षणमुपपन्नमिति स्मृतिपूर्वदृष्टरूपपदाभ्यामुपपादितम्। अन्ये तु ताभ्यां दोषादित्रयजन्यत्वं कार्याध्यासलक्षणमुक्तमित्याहुः। अपरे तु स्मृतिरूपस्मर्य-माणसदृशः, सादृश्यं च प्रमाणाजन्यज्ञानविषयत्वम्, स्मृत्यारोपयोः प्रमाणाजन्यत्वात् पूर्वदृष्टपदं तज्जातीयपरम्, अभिनवरजतादेः पूर्वदृष्टत्वाभावात्। तथा च प्रमाणा-जन्यज्ञानविषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणं ताभ्यामुक्तम्। परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणं व्याख्यातमेव। तत्र स्मर्यमाणगङ्गादावभि-नवघटे चातिव्याप्तिनिरासाय प्रमाणेत्यादिपदद्वयमित्याहुः। तत्रार्थाध्यासे स्मर्य-माणसदृशः परत्र पूर्वदर्शनादवभाष्यत इति योजना। ज्ञानाध्यासे तु स्मृतिसदृशः परत्र पूर्वदर्शनादिति वाक्यं योजनीयमिति। अध्यासविषये वादिनां बहुविप्रति-पत्तयो दृश्यन्ते; तथाहि—केचिदन्यत्रान्यधर्माध्यास इति वदन्ति। अन्यथाख्याति-वादिनो नैयायिका अन्यत्र शुक्त्यादावन्यधर्मस्य स्वावयवधर्मस्य देशान्तरस्थरूप्यादे-रध्यास इति वदन्ति। आत्मख्यातिवादिनो विज्ञानवादिनो बौद्धाः। एतेषां मते विज्ञाना-तिरिक्तं वस्तु नास्ति; रजतादिकं सर्वमपि बुद्धिरूपमेव, ज्ञातृज्ञेयज्ञानानां पृथग्-

रूपेणावभासो भ्रमः। अनादिवासनावशाद् बुद्धिरेव विभिन्नाकारेणावभासते। तथा च बाह्यशुक्त्यादौ ज्ञानधर्मस्य रजतस्याध्यासः, आन्तरस्य रजतस्य बहिरवभास इति वदन्ति। अन्यथात्वं पुनरस्य बलवद्बाधकप्रत्ययवशात्, नेदं रजतमिति च बाधकस्येदन्तामात्रबाधेनोपपत्तौ न रजतगोचरता उचिता। रजतस्य धर्मिणो बाधे सति रजतं तस्य धर्म इदन्ता च बाधिते भवेताम्। तद्वरमिदन्तैवास्य धर्मो बाध्यताम्, न पुना रजतमपि धर्मी। तथा च रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठत इति ज्ञानाकारस्य बहिरध्यासः सिद्ध्यति। एवमसत्ख्यातिवादिनो बौद्धाः—इदं रजतमिति ज्ञानं स्मृत्यनुभवाभ्यां भिन्नमध्यासनामकम्। अत्र मते असत एव रजतस्य भानं भवति। एवमख्यातिवादिनो प्राभाकरा विभ्रमात्मकं ज्ञानं न स्वीकुर्वन्ति, एतेषां मते सर्वप्रत्ययानां यथार्थत्वात्। तथा चानुमानम्—विगीताः प्रत्यया यथार्थाः, प्रत्ययत्वात्, सम्प्रतिपन्नप्रत्ययवदिति। तथा च—इदं रजतमित्यत्र रजतेन सहेन्द्रियसन्निकर्षाभावाद् रजतमिति स्मरणात्मकं ज्ञानम्। इदमंशस्येन्द्रियसंप्रयोगाद् भवति प्रत्यक्षम्, अत इदमित्यनुभवात्मकं ज्ञानम्। एवं ज्ञानद्वयमभ्युपेयतेऽख्यातिवादिभिः। बुद्धिविषययोश्च भेदाग्रहादेव व्यवहारः, अतः शारीरकभाष्ये उक्तम्—"यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रमः" इति। यस्य यत्राध्यासो लोकसिद्धस्तयोरर्थयोस्तज्ज्ञानयोश्च भेदाग्रहे सति तन्मूलो भ्रमः—इदं रूप्यमिति व्यवहार इति वदन्ति, तैरपि विशिष्टव्यवहारान्यथानुपपत्त्या विशिष्टभ्रान्तेः स्वीकार्यत्वात्। एवं शून्यवादिनोऽपि तस्यैवाधिष्ठानस्य शुक्त्यादेर्विपरीतधर्मत्वकल्पना, विपरीतो विरुद्धो धर्मो यस्य तद्भावः, तस्य रजतादेरत्यन्तासतः कल्पनामाचक्षते। एतेषु सर्वेष्वभिमतेषु परत्र परावभासो लक्षणं सर्वसम्मतमेव, तदुक्तं शारीरकभाष्ये—"सर्वथापि त्वन्यस्यान्यधर्मावभासता न व्यभिचरतीति।" एवमयमध्यासस्तेन तेन रूपेण तैस्तैर्वादिभिरभ्युपगतः। तदुक्तम्—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥

अयं चाध्यासो द्विधा भिद्यते—सोपाधिको निरुपाधिकश्च, यथा लोहितस्फटिको दर्पणे मुखमिति, निरुपाधिकस्तु 'इदं रजतम्, अयं सर्पः' इत्यादिरूपः। सोपाधिकस्तु भ्रमो नाधिष्ठानतत्त्वसाक्षात्कारेण निवर्तते, अपि त्वधिष्ठानेन सह; निरुपाधिकस्त्वधिष्ठानतत्त्वसाक्षात्कारेणैव निवर्तते। एवं चाधिष्ठानाधिकरणयोश्च भेदोऽपि सूचितो भवति। यत आरोप्यविषमसत्ताकमधिष्ठानम्, अधिकरणं तु समसत्ताकमपि भवति,

यथा भूतले घट इति घटभूतलयोः समसत्ताकत्वम्। पुनरप्ययमध्यासस्त्रिधा भिद्यते— तादात्म्याध्यासः, संसर्गाध्यासः, स्वरूपाध्यासश्च। अत्राहमिदमित्यनेन मनुष्योऽहमिति तादात्म्याध्यासो दर्शितः। ममेदं शरीरमिति संसर्गाध्यासः। ननु देहात्मनोस्तादात्म्यमेव संगर्ग इति तयोः को भेदः ? इति चेत्, सत्यम्; सत्तैक्ये सति मिथो भेदस्तादात्म्यम्। तत्र मनुष्योऽहमित्यैक्यांशभानम् , ममेदमिति भेदांशरूपसंसर्गभानमिति तयोर्भेदः। एवमात्मानात्मनोरन्योन्यस्मिन्नन्योन्यतादात्म्याध्यासः, तथाऽप्यात्मनः संसृष्टरूपेणवाध्यासः, न स्वरूपेण। अत आत्मनः सत्यत्वेऽनात्मनां तु स्वरूपेणाप्यध्यास इत्यनृतत्त्वम्।

तदेवं माया चाध्यासश्च सर्वानर्थबीजत्वाद् हेयौ। हानोपायश्चाधिष्ठानसाक्षात्कारेण दर्शितं शास्त्रे, यतः साक्षात्कृतेऽधिष्ठानभूते आत्मतत्त्वे किमप्यनुष्ठेयं नास्ति कर्मोपासनादिकम्। न च तदा कोऽप्यनर्थः सम्भवति, अतोऽधिष्ठानसाक्षात्कार एव यत्नो विधेयः सूरिभिः। स च साक्षात्कारश्चित्तशुद्धौ सत्यामेव जायते, चित्तशुद्धिश्च स्वस्वकर्मणामीश्वरार्पणबुद्ध्या निष्काममनुष्ठानाद्भवतीति निष्काममेव सर्वं कर्मानुष्ठेयम्। एतच्चाधिष्ठानसाक्षात्कारस्य माहात्म्यं श्रुत्या दर्शितम्, तथाहि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥



# श्रवणमननिदिध्यासनानां स्वरूपमुपयोगश्च

श्रीमुरलीधरमिश्रः, व्याकरणविभागाध्यक्षः, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

इह जगति इष्टं वस्तु किमिति सर्वेषां साधारणी जिज्ञासा जायते । यतो हि सर्वास्वपि प्रवृत्तिष्विष्टमिष्टसाधनं चैवापेक्ष्यते । वर्तमानेष्वपीष्टेषु बहुविधेषु समासतो धर्मार्थकाममोक्षाश्चतुर्विधा एवेष्टत्वेनावधार्यन्ते, सर्वेषामिष्टवस्तूनामेष्वेवान्तर्भावात् । तत्रापि कामार्थयोः प्रत्यक्षेणैव क्षयिष्णुत्वदर्शनादन्ततः स्वत एवाभावशङ्कया नात्यन्तमिष्टता । धर्मस्य क्षयित्वे प्रत्यक्षादिप्रमाणानामनुपलम्भेऽपि "यथेह कर्मचितो लोक क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिशास्त्रप्रामाण्यात् क्षयिष्णुत्वमवगम्यते । मोक्षस्य तु "न स पुनरावर्तते" इति श्रुत्या नित्यत्वेन वर्णितत्वात् कदाचिदप्यभावशङ्काग्रहग्रहिलत्वं न सम्भवतीति स एव परमपुरुषार्थः । तत्प्राप्तिश्च नान्यैः प्रकारैर्भवितुमर्हति ऋते ब्रह्मज्ञानात्, "ब्रह्मविदाप्नोति परम्", "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय", "तरति शोकमात्मवित्" इत्यादिश्रुतिभिः । एवं चात्मज्ञानमेव मोक्षोपायः, आत्मैव ब्रह्मेति पर्यवसन्नम् । तस्य चात्मज्ञानस्योपायः "आत्मा वाऽरे श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः" इत्यादिश्रुत्या श्रवणमनननिदिध्यासनानि सिद्ध्यन्ति । तथा चोक्तं पुराणेषु—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ॥ इति ।

तत्र श्रवणं नाम वेदान्तवाक्यानि विचार्योपक्रमादिलिङ्गैर्वाक्यतात्पर्यनिर्णय इति । तथा चोक्तं पुराणेषु—

तत्र तावन्मुनिश्रेष्ठाः श्रवणं नाम केवलम् ।
उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः ॥

यद्यपि लोके श्रवणं नाम श्रोत्रेन्द्रियेण शब्दसाक्षात्कारमात्रं व्यवह्रियते, परन्त्वत्र श्रुतितात्पर्यवशाच्छ्रवणशब्दस्योक्तार्थे लक्षणा । नहि केवलं वेदान्तपाठश्रवणमात्रेणात्मज्ञानं सम्भवति, अतः श्रुतेरीदृशेऽर्थे एव तात्पर्यमवलोक्यते । मननं

नाम सर्ववेदान्तवाक्यानामाचार्यमुखाच्छ्रवणे जाते तत्र तत्रोत्पन्नानां संशयानां वाक्यानुग्राहकन्यायैः परिशीलनम्। तथा चोक्तम्—

सर्ववेदान्तवाक्यानामाचार्यमुखतः श्रियात्।
वाक्यानुग्राहकन्यायशीलनं मननं भवेत्॥ इति।

श्रवणे मननेऽपि च निदिध्यासनमैकाग्र्यम्। तथा चोक्तं पुराणेषु—

निदिध्यासनमैकाग्र्यं श्रवणे मननेऽपि च।
निदिध्यासनसंज्ञं च मननं च द्वयं बुधाः॥

नन्वेवमनया श्रुत्या आत्मज्ञानोपायत्वेन श्रवणस्य विधिरिति लभ्यते, परन्तु स नोपपद्यते। विधेर्हि तिस्रो विधा वर्तन्ते—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्च। तत्र कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिः? यथा—"ज्योतिष्टोमेन यजेत" इति विहितज्योतिष्टोमः स्वर्गादिफलकः केनापि प्रमाणेनासिद्धोऽनया श्रुत्या विधीयते। वेदान्तश्रवणस्य ब्रह्मज्ञानं प्रति हेतुत्वमन्वयव्यतिरेकाभ्यामेव सिद्धम्। दृश्यते हि लोके वैद्यादिशास्त्रश्रवणस्य वैद्यकशास्त्रविषयावगमं प्रति हेतुत्वम्। नहि तदवगमं प्रति वैद्यशास्त्रश्रवणं केनापि शास्त्रेण विधीयते; नापि नियमविधित्वमुपपद्यते। स हि पक्षप्राप्तस्याप्राप्तांशपूरणफलको विधिः। यथा—"व्रीहीनवहन्ति"। अत्र विध्यभावेऽपि पुरोडाशप्रकृतीनां तण्डुलानां निष्पादनार्थमवहननस्य प्राप्तिः सामर्थ्यादेव लब्धेत्यप्राप्तप्रापणार्थाभावान्नायं विधिः सम्भवति, परन्तु तण्डुलनिष्पत्तिकारणस्य नखविदलनादेरपि लोकावगतत्वेन तस्यापि पक्षे प्राप्तावव‌हननाप्राप्तांशस्य सम्भवात् तदंशपूरणफलकोऽवहननविधिः—नियमविधिः। न च तथाऽत्र सम्भवति। तत्र हि नियमाद्दृष्टजन्यपरमापूर्वमेव तत्कल्पकम्, इह तु ब्रह्मज्ञानस्य नित्यत्वाददृष्टजन्यत्वाभावेन नियमादृष्टकल्पने सामर्थ्याभावेन तद्वैषम्यात्। परिसंख्याविधिरपि द्वयोः शेषिणोरेकस्य शेषस्य वा, एकस्मिन् शेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य निवृत्तिफलकः। यथाऽग्निचयने—"इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति। अग्निचयनेऽश्वरशनाग्रहणं गर्दभरशनाग्रहणञ्चेति द्वयमनुष्ठेयम्। तत्राश्वरशनाग्रहणे—"इमामगृभ्णन्निति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपाद् नित्यं प्राप्नोतीति न तत्प्राप्त्यर्थो विधिः, न तदप्राप्तांशपूरणार्थो नियमविधिः, किन्तु लिङ्गाविशेषाद् गर्दभरशनाग्रहणेऽपि

मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः। यथा वा 'पञ्च पञ्च नखा भक्ष्याः' इत्यत्र पञ्चपञ्चनखभक्षणरूपो न विधिः, किन्तु पञ्चेतरपञ्चनखभक्षणमपि रागात्प्राप्तं तन्निवृत्त्यर्थम्। एवमत्रात्मसाक्षात्कारस्योपनिषदतिरिक्तात् प्राप्त्यसंभवेन तदभावात्। न च नियमपरिसंख्याविध्योः को भेदः ? नियमविधावपि व्रीहीनवहन्तीत्यादौ पक्षे प्राप्तस्यावहननस्याप्राप्तांशपरिपूरणे कृते तदवरुद्धत्वात् पाक्षिकसाधनान्तरस्य नखविदलनादेर्निवृत्तेरपि लभ्यत्वादिति वाच्यम्; विधितोऽवहनननियमं विना आक्षेपलभ्यस्य नखविदलनादेर्निवर्तयितुमशक्यतया प्राथम्याद् नियमविधेरेवाश्रयणाद् विप्रकृष्टायास्तदनुनिष्पादिन्या इतरनिवृत्तेः सन्निकृष्टफलसम्भवे फलत्वानौचित्यादिति चेन्न; अपूर्वविधित्वस्वीकाराद् वेदान्तश्रवणे ब्रह्मसाक्षात्कारहेतुत्वस्य लोकतोऽसिद्धेः। वेदान्तश्रवणनिष्पन्नस्यापि पुरुषस्य ब्रह्मसाक्षात्कारानुदयात्। गर्भगतस्य वामदेवस्य वेदान्तश्रवणाभावेऽपि ब्रह्मसाक्षात्कारस्य सत्त्वेनान्वयव्यतिरेकव्यभिचारात्। न च सामान्येन श्रवणमात्रस्य तत्तद्विषयसाक्षात्कारे हेतुत्वं गान्धर्वादिशास्त्रे तत्तद्विषयषड्जादिस्वरस्य साक्षात्कारदर्शनेन कल्पयितुं शक्यम्, कर्मकाण्डादिश्रवणात्; तद्विषयधर्मादिसाक्षात्कारस्यादर्शनेन तथा कल्पयितुमशक्यत्वात्। अत एव शाङ्करभाष्ये—"सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" इत्यधिकरणे बाल्यपाण्डित्यवद् मौनस्य विधित्वमित्युक्तत्वेन पाण्डित्यशब्देन गृहीतस्य श्रवणस्य विधित्वस्वीकारः संगच्छत इति प्रकटार्थकारादयः।

विवरणकाराणां मते तु नायमपूर्वविधिः; अपि तु नियमविधिरेव। दृष्टफलस्य धर्मज्ञानस्य हेतुभूतेऽध्ययनविधौ नियमविधिस्वीकारस्य पूर्वमीमांसायां कृतत्वेन तद्वदेवात्रापि सम्भवात्। "व्रीहीनवहन्ति" इत्यादौ परमापूर्वस्य नियमादृष्टजन्यस्य नियमविधिकल्पकत्वम्, तदाऽत्रापि ब्रह्मज्ञानस्य सर्वादृष्टजन्यस्य नियमविधिकल्पकत्वं सुवचम्, "सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते" इति गीतावाक्येन ब्रह्मज्ञानस्य सर्वादृष्टजन्यत्वात्। नन्वप्राप्तत्वेनापूर्वत्वाद्विधिरेवायम्, न नियम इति चेन्न; सामान्यरूपेणापरोक्षवस्तुविषयकप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य सिद्धौ वेदान्तश्रवणस्यापि ब्रह्मज्ञाने हेतुत्वस्य प्राप्तेः सुगमत्वात्। पूर्वोक्तान्वयव्यतिरेकव्यभिचारस्य सहकारिवैकल्पेनाप्युपपत्तेः। कृतवेदान्तश्रवणस्य किञ्चित्सहकारिवैकल्पेन प्रतिबन्धाद्वा इदानीं ब्रह्मसाक्षात्कारादर्शनेऽपि भाविजन्मनि ब्रह्मसाक्षात्कारस्य कल्पनात्। वामदेवादेरपि पूर्वजन्मनि वेदान्तश्रवणसत्त्वान्नास्ति व्यभिचारः।

अन्यथा व्यभिचारेणैव हेतुत्वबाधे श्रुत्याऽपि तज्ज्ञानं न सम्भवेत्। तथा च प्राप्तत्वान्नापूर्वविधिः।

अत एव "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणभाष्ये दर्शनपर्यवसानानि श्रवणादीन्यावर्तमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलनिष्पत्तिपर्यवसानानीति। श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दर्शपौर्णमासिकावघातन्यायप्राप्तौ आवृत्त्युपदेशोऽपूर्वविधित्वे स न संगच्छेत्। तथाहि नियमाभावे यथा वस्तु किञ्चिच्चक्षुषा वीक्षमाणस्तत्र स्वागृहीते सूक्ष्मे विशेषान्तरे केनचित् कथिते तज्ज्ञानात् तस्यैव चक्षुषः पुनः प्रणिधानं क्रियते, तथैव मनसा अहमिति साक्षात्कारे जाते तत्पश्चाद् वेदान्तैरध्ययनगृहीतैरुपदिष्टे निर्विशेषे आत्मरूपे ब्रह्मणि तदवगमाय पुनरपि मनःप्रणिधाने एव यत्नः पाक्षिकः स्यात्, तदप्राप्तांशपूरणफलकं वेदान्तश्रवणम्।

किञ्च, "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिश्रुतेर्भिन्नात्मज्ञानेन मुक्तिरिति भिन्नात्मविचाररूपे दर्शनान्तरेऽपि प्रवृत्तिः पाक्षिकी स्यात्तन्निवृत्तये नियमविधिः। इदं सर्वं यदयमात्मा इत्यादिप्रकरणेनात्मशब्दस्याद्वैतात्मपरत्वात्।

अथवा यथा गुरुमुखादध्ययनपूर्वकवेदान्तश्रवणेन ब्रह्मसाक्षात्कारस्तथैव निपुणस्य स्वप्रयत्नमात्रसाध्याद् वेदान्तविचारादपि ब्रह्मसाक्षात्कारप्राप्तिः प्राप्नोति, तत्र गुरुमुखादध्ययनेनैवाविद्यानिरासपूर्वको ब्रह्मसाक्षात्कारः, अन्यथा कल्मषादिनिरासाभावेन प्रतिबन्धकसद्भावादविद्यानिवृत्त्यभावात् स दुर्लभः स्यात्। प्रतिबन्धकाभावस्यापेक्षितत्वादेव सत्यपि प्रत्यक्षदर्शने उपाधिना प्रतिबन्धाद् नास्ति प्रतिबिम्बभ्रमनिवृत्तिः। न च "तद्विज्ञानार्थं स गुरुमेवोपगच्छेत्" इति विधिनैव गुरुरहितविचारनिवृत्तिसिद्धौ न तदर्थं नियमविधिरिति वाच्यम्, गुरूपसदनस्य श्रवणविधेरङ्गतयाऽङ्गिनोऽभावेऽङ्गस्य विधेर्दूरापास्तत्वेन तथा कल्पनाऽसम्भवात्। अथवा अद्वैतात्मपरभाषाप्रबन्धश्रवणेऽपि पक्षे प्रवृत्तिः स्यात्, तन्निवारणार्थं नियमविधिराश्रयणीय एव। यद्यपि "न म्लेच्छितवै" इति निषेधो वर्तत एव तन्निवृत्तये; तथापि बुद्धिमान्द्यान्निषेधमुल्लङ्घ्यापि कश्चित् प्रवर्तेतेति नियमविधिः।

केषाञ्चिन्मते शब्दज्ञानेन प्रथमं परोक्षज्ञानमेव जन्यते, नापरोक्षज्ञानम्; शब्दस्य परोक्षज्ञानजननस्वभावात्। पश्चात् सहकारिसमवधानादिनाऽपरोक्षज्ञानजनकत्वं

भवति। यथा प्रत्यभिज्ञास्थले पूर्वं केवलं चैत्रादिविषयकं ज्ञानं जायते। पश्चात् तत्समर्थसंस्कारसहितस्येन्द्रियस्यैव तत्रांशगोचरज्ञानजनकत्वम्। एवं यथा शब्देन परोक्षज्ञानजननेऽपि विधुरपरिभावितकामिनीसाक्षात्कारस्थले क्लृप्तभावनाप्रचय-साहित्यादपरोक्षज्ञानजनकत्वम्, एवमेव पूर्वं वेदान्तश्रवणेन परोक्षज्ञानजननेऽपि मनननिदिध्यासनाभ्यां सहकारिभ्यां सम्बद्धस्य तस्यैव ब्रह्मसाक्षात्कारजनकत्वेन स्वत एव प्राप्तेर्नापूर्वविधिः, किन्तु नियमविधिरेव।

केचित्तु मन्यन्ते—"मनसैवानुद्रष्टव्यम्", "शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन एवात्मदर्शने करणम्" इत्यादिश्रुतिगीताभाष्यवचनैश्च ब्रह्मसाक्षात्कारो मानस एव भवति। वेदान्तश्रवणेन तु निर्विचिकित्सपरोक्षज्ञानं भवति। तत्र वेदान्तश्रवणेनैव निर्विचिकित्सज्ञानं जननीयम्, नान्येनेति नियमविधिरेव।

कैश्चित्तु मनःसहकारितया श्रवणविधिरुपयुज्यते, न साक्षात्। यथा गान्धर्व-शास्त्रं श्रोत्रेन्द्रियसहकारितया। अपरोक्षज्ञानन्तु याथातथ्येन रूपेण श्रोत्रेन्द्रियेणैव, किन्तुगान्धर्वशास्त्रसहकारसम्पन्नेनैव, न स्वतन्त्रतया। एवमेव वेदान्तशास्त्रश्रवणसहकार-सम्पन्नेनैव मनसा ब्रह्मसाक्षात्कारः। तत्र सहकारितासम्पत्तावेव नियमविधिरिति स्वीक्रियते।

संक्षेपशारीरकमते श्रवणं नाम वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्य-निर्णयानुकूलन्यायविचारात्मकचेतोवृत्तिविशेषः। तया च न परोक्षमपरोक्षं वा ज्ञानं जायते; प्रमाणेन परोक्षात्मिकाऽपरोक्षात्मिका वा वृत्तिर्भवति। न चोक्तविचारा-वधारिततात्पर्यविशिष्टशाब्दज्ञानमेव श्रवणमस्त्विति वाच्यम्; ज्ञानस्याविधेयत्वेन विध्यनुपपत्तेः। न च तादृशविचारस्य तात्पर्यनिर्णयद्वारा परम्परया ब्रह्मज्ञानं फल-मस्त्विति वाच्यम्; तात्पर्यनिर्णयस्य शाब्दज्ञाने कारणत्वानुपगमात्। तस्मात् श्रवणं तात्पर्यनिर्णयद्वारा पुरुषापराधनिराससम्पादनार्थमिति श्रवणविधिरिति।

वाचस्पतिमते—"आत्मा श्रोतव्यः" इति मननादिवदात्मविषयकत्वेन निबध्य-मानमागमाचार्योपदेशजन्यमात्मज्ञानमेव, न तु तात्पर्यविचाररूपम्। ज्ञानस्य चावि-धेयत्वाद् न कोऽपि विधिः सम्भवति। ननु मननं हि युक्त्याऽऽलोचनरूपो व्यापारः। निदिध्यासनमपि ध्यानरूपा क्रियैवेति कथं मननादिवदिति दृष्टान्तत्वेनोपन्यासः? इति चेत्सत्यम्, आत्मा ब्रह्मस्वभावः, चिद्रूपत्वात्, ब्रह्मवत्। बुद्ध्यादिः कल्पितः,

दृश्यत्वात्, शुक्तिरजतादिवत्—इत्यनुमितेरेव मननत्वस्वीकारेण ज्ञानरूपस्य तस्य सुवचत्वात्। तथा चोक्तं मैत्रेयीब्राह्मणवार्त्तिके चतुर्थे—

आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते।
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते।
पदार्थविषयस्तर्कस्तथैवानुमितिर्भवेत् ॥

इति श्रुतार्थदाढर्याय तर्करूपं मननं विधीयत इत्युचित एव दृष्टान्तः। अत एव "तत्तु समन्वयात्" इति सूत्रे आत्मज्ञानविधिनिराकरणानन्तरं किमर्थानि तर्हि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादीनि वाक्यानि विधिच्छायानीति ब्रूमः। विधिच्छायानीत्यस्य स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति। तथा च वेदान्ततात्पर्यविचाररूपस्य श्रवणस्य तात्पर्यनिर्णयद्वारा वेदान्ततात्पर्यभ्रमसंशयरूपप्रतिबन्धनिरास एव न फलम्, न ब्रह्मज्ञानम्, प्रतिबन्धकान्तरनिरासो वा। तथा च तस्य लोकत एव सिद्धेर्न तत्र विधेस्त्रिविधस्याप्यवकाशः।

न च विचारविध्यसम्भवेऽपि विचारविषयवेदान्तनियमविधिसम्भव इति। भाषाप्रबन्धादिव्यावर्त्यसम्भवादिति वाच्यम्, "स्वाध्यायोऽध्येतव्यः" इत्यर्थावबोधार्थनियमविधिबलादेवाध्ययनगृहीतवेदोत्पादितं वेदार्थज्ञानं फलपर्यवसायि, न कारणान्तरोत्पादितम् – इत्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादीनामप्राप्तेश्च। न च "सहकार्यन्तरविधिः" इत्यधिकरणे बाल्यपाण्डित्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधेरभ्युपगमेन तद्विरोध इति वाच्यम्, विचारे विचार्य्यतात्पर्यनिर्णयहेतुत्वस्य, वस्तुसिद्ध्यनुकूलयुक्त्यनुसन्धानरूपे मनने, तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्त्ववगमवैशद्यहेतुत्वस्य च लोकसिद्धत्वेन तेषु विधेरनर्हत्वात्, विधिच्छायार्थवादस्येव प्रशंसाद्वारा प्रवृत्त्यतिशयकरत्वमात्रेण तत्र विधिव्यवहारात्। एवञ्च न श्रवणं विधिः, अपि तु विधिकल्प एव, प्रवृत्त्यतिशयकरत्वात्।

तत्रैवं विचारोऽवशिष्यते—किमेषां त्रयाणां स्वातन्त्र्येण विधित्वम्, उत अङ्गाङ्गिभावः ? तत्रापि कस्य प्राधान्यम्, कयोरङ्गत्वमिति ? तत्रापि काचिद् दृष्टिः प्रक्षिप्यते संक्षेपतः। तत्र वाचस्पतिमिश्रमते त्रयाणामपि ब्रह्मज्ञानोत्पत्तौ कारणत्वम्। तत्र "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" ( श्वे० १–३ ), "ततस्तु तं पश्यति निष्कलं ध्यायमानः" ( मु० ३–१–८ ) इत्यादिश्रुतिभ्यो निदिध्या-

सनं साक्षात्कारणम्। निदिध्यासनञ्च मननायत्तम्; अकृतमननस्यार्थदाढर्याभावेन निदिध्यासनासंभवात्। एवं मननमपि श्रवणाधीनम्, श्रवणाभावे तात्पर्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात्। विवरण-काराणां मते श्रवणं प्रधानम्; मनननिदिध्यासने तदङ्गभूते। यद्यपि श्रवणादनन्तरमेव मनननिदिध्यासने भवतः, तथापि तयोराराद्‌उपकारकत्वम्। एवञ्च श्रवणमनन-निदिध्यासनयोरङ्गाङ्गिभाव इष्यते, स चाङ्गाङ्गिभावो न तार्तीयेन विधिना, श्रुति-लिङ्गादिप्रमाणेष्वेकस्याप्यत्राभावात्, किन्तु यथा घटादिकार्ये मृत्पिण्डादीनां प्रधान-कारणता, चक्रादीनां सहकारिकारणता, तथैव श्रवणमनननिदिध्यासनानामपि। सूचितं चैतद्विवरणाचार्यैः—“शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्। मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितकरणस्य विशिष्टशब्दावधारणस्य व्यवहितमनननिदिध्यासने तदङ्गे अङ्गीक्रियेते” इति।

तदेवं मनननिदिध्यासनसहकृतवेदान्तश्रवणेन ब्रह्मज्ञानं जायते, शुद्धचिदा-कारान्तःकरणवृत्तिर्जायते, सा चान्तःकरणवृत्तिः स्वाधिष्ठानाविद्यासहिता विनश्यति, ततश्चाद्वैतं शुद्धं चैतन्यमभिव्यक्तं प्रदीपधारावदविच्छिन्नं स्वयं प्रकाशते। नास्त्येवं-विधायाऽश्रितः प्रकाशनस्यावश्यकता॥



# श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च

श्रीरामप्रसादत्रिपाठी, प्राचीनव्याकरणदर्शनविभागाध्यक्षः, वा० सं० वि० वि०,वाराणसी।

कर्मोपास्तिज्ञानाख्यकाण्डत्रितयात्मकेषु वेदेष्वात्मतत्त्वप्रतिपादकं ज्ञानकाण्डमुपनिषत्पदेन प्रसिद्धमस्ति। तत्र "इदं सर्वं यदयमात्मा", "नेह नानास्ति किञ्चन", "एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिभिः प्रतिपादितं यदद्वितीयं ब्रह्मात्मतत्त्वम्, तदेव भगवता श्रीबादरायणेन स्वीयब्रह्मसूत्रैः प्रत्यपादि। तदेव च श्रीशङ्कराचार्यप्रभृतिभिराचार्यैर्विशदीकृतमस्ति स्वस्वभाष्येषु।

तत्र चोक्तब्रह्मात्मतत्त्वस्यात्यन्ताप्रसिद्धौ न तद्विचाराय वेदान्तदर्शनस्य प्रवृत्तिः सम्भवति; उद्देश्यभूतविषयस्यैवाप्रसिद्धेः। यथावत्प्रसिद्धावपि न विचारप्रवृत्तिरुदेतुमर्हति, अनुपयोगात्। अतश्च सामान्येन केनचिद्रूपेण प्रसिद्धं तत्तत्त्वमुद्दिश्य तद्याथात्म्यं निर्णेतुं विचारः प्रवृत्तिमर्हति। तदिह ब्रह्मपदस्य निरतिशयमहत्त्ववति सामान्येन प्रसिद्धत्वात्, आत्मपदस्य च प्रत्यगर्थे सामान्येन प्रसिद्धेः, "अयमात्मा ब्रह्म", इत्यादौ समभिव्याहारात्तयोरेकत्वस्याऽप्यापाततः प्रसिद्धेः, तद्विशेषस्य च परोक्षत्वसद्वितीयत्वाद्यनधिकरणत्वस्य देहेन्द्रियप्राणमनोबुद्ध्यहङ्कारविलक्षणतत्साक्षिप्रत्यगभिन्नसच्चिदानन्दाद्वयब्रह्मरूपत्वस्य चाप्रसिद्ध्या सामान्यतः प्रसिद्धवस्तूद्देशेन तद्विशेषनिर्धारणाय विचारप्रवृत्तिः सूपपद्यते। तथा च श्रुतिः—आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति। एषा चात्मसाक्षात्कारमनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणमनुष्ठेयं विधत्ते।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इत्येषा स्मृतिरपि तदेवानुवदति।

यद्यपि कपिलादिदर्शनसिद्धानां प्रधानादीनामपि—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥

इत्यादिवेदप्रतिपाद्यत्वमस्ति, तथात्युपक्रमोपसंहारादिभिर्लिङ्गैर्वेदान्ततात्पर्ये निरूप्यमाणे प्रत्यक्स्वरूपे ब्रह्मण्येव पर्यवसानस्य दर्शनेन ब्रह्मैव वेदान्तस्य विषयः। तथा च श्रुतिः—"सर्वे वेदा यत्पदमामनन्ति" इति। स्मृतिश्च—"वेदैश्च सर्वैरहमेव वेद्यः" इति।

एवं चास्य वेदान्ततात्पर्यविषयीभूतस्य ब्रह्मणो दर्शनमुक्तश्रुतिबोधितं साक्षात्काररूपमेवात्र ग्राह्यम्, श्रवणादिना तस्यैव सम्भवात्, तेनैव च विषयस्याशेषतो भ्रमादिनिवृत्तेर्जननात्।

तथा च ब्रह्मसाक्षात्कारोपायाः के? इति जिज्ञासायामुच्यते—श्रोतव्यो मन्तव्य इत्यादि। अत्र त्रिषु पदेषु श्रवणं मननं नितरां ध्यानं च धात्वर्थः, तव्यप्रत्यार्थश्च प्रैषः, "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति पाणिनिसूत्रात्। तत्र श्रवणमननादीनां सकर्मकतया किंकर्मकाणीमानि? इति जिज्ञासा, प्रैषश्चात्र विधिः। स त्रिविधः—अपूर्वनियमपरिसंख्याभेदादिति प्रसिद्धं मीमांसकनिकाये। तत्र त्रिषु विधिषु किंविधिविषयाश्चैतानि? इति जिज्ञासा च कर्मविशेषस्य विधिविशेषस्य च प्रतिपादनेनैव शमिष्यति, तथा सत्येव च श्रवणादीनां स्वरूपस्य विशेषतो निर्णयः सम्भवति।

तत्र प्रकटार्थकारमते[1]—वेदान्तवाक्यानामेवात्रोपस्थितत्वात् कर्मतया ग्रहणमिति श्रोत्रेन्द्रियजन्या वेदान्तवाक्यार्थावबोधिका वेदान्तवाक्यकर्मिका श्रवणक्रियैव श्रवणपदार्थः। अपूर्वविधिविषयश्च सः। अपूर्वविधिश्चात्यन्तमप्राप्तस्य प्राप्तिफलको भवति। यथा "व्रीहीन् प्रोक्षति" इत्यत्र प्रोक्षणविधिः। अत्र हि व्रीहीणां प्रोक्षणं निर्दिष्टवाक्येनैव प्राप्तम्, नह्यन्येन प्रमाणेनेति। तथैव वेदान्तवाक्यश्रवणं ब्रह्मदर्शने हेतुरित्यत्रापि श्रोतव्य इति विधिवाक्यादृतेऽन्यदन्वयव्यतिरेकप्रमाणं नास्ति। लोके कृतश्रवणानामपि ब्रह्मसाक्षात्कारानुत्पत्त्या तच्छ्रवणमकृतवतोऽपि गर्भे एव शयानस्य ब्रह्मर्षिवामदेवस्य तदुत्पत्त्या उभयविधव्यभिचारदर्शनात्।

यद्यपि गान्धर्वशास्त्रस्य श्रवणेन षड्जादिस्वराणां व्याकरणशास्त्रस्य च श्रवणेन शब्दब्रह्मणश्च साक्षात्कारो भवतीति श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारे कारणमिति सामान्यनियमेनैव वेदान्तश्रवणस्यापि श्रोतव्यस्य ब्रह्मणः साक्षात्कारे हेतुत्वं प्राप्नोतीति कथमस्यापूर्वविधित्वमिति शङ्कितुं शक्यते, तथापि कर्मकाण्डादिश्रवणेन

---

१. सिद्धान्तलेशसंग्रहः—१ परि०, पृ० १०–१३।

श्रोतव्यार्थस्यादृष्टस्वरूपधर्मादेः साक्षात्काराभावेनोक्तनियमस्य व्यभिचारग्रस्तत्वान्नास्त्यवसरोऽस्याः शङ्काया इत्यपूर्वविधित्वं सुस्थमेव ।

विवरणानुयायिनामाचार्याणां मते[१] तु—श्रवणस्य स्वरूपं पूर्वमतवदेव । विध्यंशे एव विशेषः । तथा हि—अपरोक्षवस्तूनि विषयीकुर्वत् सर्वमेव प्रमाणं स्वविषयस्य प्रत्यक्षं जनयति । शब्दादपि विषयस्य प्रत्यक्षं भवतीति प्रतिपादके शाब्दापरोक्षवादे उक्तनियमो युक्तिभिर्व्यवस्थापितोऽस्ति । अतश्च वेदान्तवाक्यश्रवणमपि नित्यापरोक्षब्रह्मणः साक्षात्कारं जनयेदेवेति विधिं विनापि श्रवणे प्रत्यक्षहेतुत्वं प्राप्तमेवेति नायं श्रवणविधिरपूर्वः, अपि तु नियमः । स च पाक्षिकाप्राप्तिपरिपूरणफलकः, यथा व्रीहीनवहन्तीति । अत्र हि पुरोडाशप्रकृतित्वेन व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिवत् पक्षान्तरे नखविदलनादेरपि प्राप्तिः, तथा च नखविदलनपक्षेऽप्राप्तस्यावहननरूपांशस्य पूरणादवघातेनैव तण्डुलान् निष्पादयेदिति नियमविधिः । एवं प्रकृतेऽपि वेदान्तवाक्यश्रवणेन ब्रह्मसाक्षात्कारः प्राप्तः, लोकभाषाश्रवणेन च । तत्र पक्षेऽप्राप्तस्य वेदान्तश्रवणस्य पूरणायायं नियमः—वेदान्तश्रवणेनैव ब्रह्म साक्षात्कुर्यादिति । "न म्लेच्छितवै, नापभाषितवै" इत्यादिनिषेधैरेव लोकभाषाश्रवणस्याप्राप्तिरिति न शङ्कनीयम्, शास्त्रव्युत्पत्तौ दुर्बलो वेदान्तश्रवणमशक्यं मन्वानः पुरुषार्थनिषेधमतिक्रम्यापि भाषाग्रन्थेनाद्वितीयमात्मतत्त्वं जिज्ञासमानस्तत्रैव प्रवर्तेतेति नियमत्वस्यावश्यकत्वात् ।

किञ्च, "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति श्रुत्या जीवाद् भिन्नस्य परस्यात्मनो ज्ञानेन मोक्ष इति भ्रमः सम्भवेत् कदाचित् । ततश्च मोक्षसाधनीभूतज्ञानाय जीवभिन्नात्मविचाररूपे न्यायादिशास्त्रश्रवणेऽपि पक्षे प्रवृत्तिः सम्भवतीति तद्व्यावृत्तयेऽप्ययं नियम एव ।

अपूर्वविधित्वपक्षोक्त उभयविधो व्यभिचारस्तु कथमपि नैव सम्भवति । कृतश्रवणस्य चित्तैकाग्र्यादिसहकारिकारणानामभावेनान्वयव्यभिचारस्य, महर्षिवामदेवस्य जन्मान्तरीयश्रवणस्य तत्फलस्य च सम्भवेन व्यतिरेकव्यभिचारस्यापि चाशेषतो निराससम्भवात् ।

---

१. सि० ले० सं०—१ परि०, पृ० १४–२७ ।

एकदेशिनो मते तु[१]—शब्दो हि पूर्वं शाब्दात्मकं परोक्षज्ञानमेव जनयति। पश्चाद् मनननिदिध्यासनाभ्यां युक्तः सन् प्रत्यक्षमपि जनयति। यथा कामिनी-भावनाभावितं कामुकस्य मनः कामिन्याः साक्षात्कारं सम्पादयति। एवं च शब्दस्य स्वविषये स्वतः परोक्षज्ञानजनकत्वस्य, मननादिप्रयुक्तभावनाधिक्यस्य, सहभावेना-परोक्षज्ञानजनकत्वस्य च प्राप्तत्वान्नियमविधिरयमिति।

कस्यचिदाचार्यस्य मते तु[२]—वेदान्तश्रवणं न ब्रह्मसाक्षात्कारे हेतुरपि तु मन एव; मनसैवानुद्रष्टव्यमिति श्रुतेः। श्रवणं तु निःसन्दिग्धपरोक्षज्ञानार्थमिति परोक्ष-ज्ञानार्थत्वेनैवायं नियमविधिरिति।

पूर्वमतापेक्षयाऽत्रायं विशेषः—यद् ब्रह्मसाक्षात्कारो मानस इति मनसः सहकारितया मनने निदिध्यासने च विधिः। पूर्वत्र तु ब्रह्मसाक्षात्कारः शाब्द इति शब्दस्य सहकारित्वेन तयोर्विधिरिति।

संक्षेपशारीरककृतां मते तु[3]—वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिश्चय-जनको न्यायविचारात्मकश्चेतोवृत्तिविशेष एव श्रवणम्। तस्य ब्रह्मणि परोक्षमपरोक्षं वा ज्ञानं न फलम्, अपि तु शब्दादिप्रमाणानामेव तत्फलम्।

ननु तादृशविचारावधारिततात्पर्यविशिष्टशाब्दज्ञानमेव श्रवणमस्तु, तस्य च ब्रह्मज्ञानं फलं सम्भवत्येवेति चेत्तन्न; ज्ञानस्य सामग्रीतन्त्रतया तत्र विधानस्यानुपपन्न-त्वात्। नह्यात्मसंयुक्तमनःसंयुक्तचक्षुःसंयुक्तस्य घटादेश्चाक्षुषं वारयितुं शक्यमिति। तस्मात्तात्पर्यनिर्णयद्वारा पुरुषापराधनिरासार्थत्वेनैव विचाररूपे श्रवणेऽयं नियम-विधिरुचितः स्वीकर्तुम्। उक्तं च—

ऊहापोहात्मिका चित्तक्रियैव श्रवणं विधेः।  
अपरोक्षं परोक्षं वा नामानस्यास्य (?) तत्फलम्॥  
तस्मात् पुंदोषतात्पर्यभ्रान्तिसंस्कारशान्तये।  
नियमोऽस्येति संक्षेपशारीरककृतो विदुः॥ इति।

वार्तिककृन्मते तु[४]—यथा चिकित्साज्ञानार्थं चरकसुश्रुतादिग्रन्थश्रवणे प्रवृत्तो मध्येऽन्यव्यापारेऽपि प्रवर्तते; तथैव ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्याऽप्यन्यत्राऽपि

---

१. सि० लें० सं०, पृ० २८। २. सि० लें० सं०, पृ० ३०।

३. सि० लें० सं०, पृ० ३२–३६। ४. सि० लें० सं०, पृ० ३७–४०।

व्यापारे प्रवृत्तिः सम्भवति, अतस्तन्निरासफलकोऽयं परिसंख्याविधिः। स च तत्र चान्यत्र च प्राप्तावन्यनिवृत्तिफलको भवति।

यथा—"पञ्च पञ्चनखा भक्ष्याः" इति। अत्र रागतः पञ्चनखानां तदन्येषां च भक्षणं प्राप्तमेव, तत्र पञ्चनखेतरप्राणिनां भक्षणस्य निवृत्तिरेवास्य विधेः फलम्। एवं प्रकृतेऽपि ब्रह्मज्ञानाय वेदान्तश्रवणे एव प्रवृत्तिः कार्या, न तु मध्यपातिनि व्यापारान्तर इति व्यापारान्तरप्रवृत्तिनिरासोऽत्र फलमिति।

श्रीशङ्करभगवत्पादानुयायिश्रीवाचस्पतिमिश्राणां मते तु—"आत्मा श्रोतव्यः" इत्यात्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजनितमात्मविषयकं शाब्दज्ञानमेव, न तु तात्पर्यविचाररूपम्। मननादौ यथा आत्मा विषयस्तद्वदत्राऽपि स एव। एवं च श्रवणादीनां ज्ञानरूपतया ज्ञानस्य च सामग्रीतन्त्रतायाः पूर्वमुक्तत्वान्न ह्यत्र कोऽपि विधिः। मननं त्वत्रानुमितिरूपमेव ज्ञानम्, न तु ज्ञानसामान्यम्। उक्तं च—

आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते।
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते॥
पदार्थविषयस्तर्कस्तथैवाऽनुमितिर्भवेत् ॥ इति।[१]

एवमेव निदिध्यासनमपि सन्नर्थस्याविवक्षितत्वाद् विजातीयप्रत्ययान्तरितसजातीयप्रत्ययप्रवाहरूपं विज्ञानमेव। तथा च श्रुतिः[२]—"मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते वा" इति, "मैत्रेय्यात्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेन"[३] इति च। व्यवहृताश्च श्रवणादिपदानामेतेऽर्थाः श्रीमता गङ्गेशोपाध्यायेन चिन्तामणेः पक्षतायाम्[४]—"मुमुक्षोः शब्दादात्माऽवगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमितीच्छयाऽऽत्मानुमानम्" इति वदता। श्रीमतोदयनाचार्येण च[५]न्यायकुसुमाञ्जलौ—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥

इति वदता।

---

१. मैत्रेयीब्राह्मणे वार्त्तिकमेतत्। २. बृ० आ०, ६ अ०।
३. बृ० आ०, ४ अ०। ४. जागदीशी पक्षता, पृ० ५४।
५. न्या० कु०, प्र० स्त०, श्लो० ३।

"तत्तु समन्वयात्" (उ० मी० अ० १, पा० १, सू० ४) इति सूत्रे भगवता श्रीशङ्कराचार्येणात्मज्ञानस्य विधित्वं निराकृत्य शङ्कितम्—"किमर्थानि तर्हि 'आत्मा वाऽरे द्रष्टव्यः' इत्यादीनि वचनानि विधिच्छायानि" इति, "स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" इति च समाहितम्।

पुनश्च "अर्हे कृत्यतृचश्च" इति पाणिनिसूत्रेण अर्हेऽर्थे तव्यं प्रत्ययं स्वीकृत्य श्रवणमननादिस्तु तौ तत्प्रत्ययस्य तात्पर्यमवधार्य मुमुक्षोः सोत्साहं श्रवणादिषु प्रवृत्तिं सिद्धान्तयता तव्यप्रत्ययस्यानर्थक्यं वारितं भगवता भाष्यकृतैव, एवं चैषां विधित्वं नास्त्येवेति निर्णीतम्। युक्तं चैतत्—विचाररूपेऽपि श्रवणे विचारविषयतात्पर्यनिश्चयहेतुता, वस्तुसिद्ध्यनुकूलयुक्तिज्ञानरूपे मनने तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्तुनः परिज्ञाने वैशद्यस्य[1] हेतुता च लोकत एव सिद्धेति नात्यन्ताऽप्राप्तिमूलकं विधित्वमेषु सम्भवति। तस्मात् "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविध्युपगृहीतमेतेषां विध्याभासवाक्यानामध्ययनम्। उक्तविषये भाष्यटीकायां भामत्यामतिशयितोहापोहाभ्यां विचारः कृतोऽस्ति मिश्रैः। तत्र हि—"आत्मैवेत्युपासीत इत्यादयो विधयः श्रूयन्ते" इत्यारभ्य "अन्यतः प्राप्ता एव हि श्रवणादयो विधिस्वरूपैर्वाक्यैरनूद्यन्ते। न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकत्वात्। तथाहि—तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति, आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरताऽनुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति" इत्यन्तो ग्रन्थः[2], एतज्जातीयोऽन्योऽपि सन्दर्भस्तत्सम्बन्धी कल्पतरुश्चावश्यं द्रष्टव्यः।

अथ कया रीत्यैतानि श्रवणादीन्यलौकिके निर्विशेषात्मदर्शने समर्थानि भवन्तीति चेत्, उच्यते—नह्यलौकिक एव तादृशसाक्षात्कारे एषां हेतुता, अपि तु लौकिकेऽपि सन्दिग्धवस्तुसाक्षात्कारेऽस्त्येवैषां कारणता। तथा हि—यस्मिन् विषये सुवर्णरजतहीरकादौ यस्मिन् वा कर्तव्येऽर्थे यस्य वा वस्तुनः साधुत्वासाधुत्वयोः सन्देहो जायते। तत्र तत्र तद्विषयकशास्त्रश्रवणमावर्तनीयम्, श्रुतस्यार्थस्यैवंरीत्या

---

१. वैशद्यं विशदता प्रतिबन्धशून्यतेति यावत्।

२. भा० भामती—कल्पतरुः, पृ० १२९, पं० २२, नि० सा०।

परोक्षनिश्चये सति नानाहेतुभिस्तद्विषयकं मननं विधेयम्, मते च तस्मिन् विषये दृढायाश्चित्तवृत्तेर्विजातीयवृत्त्यनन्तरितः प्रवाहोऽभ्यसनीयः। एवं कृते सति तत्तद्विषयकः संशयोऽपगतो भविष्यति, तदनु तस्य तस्यार्थस्य साक्षात्कारो भवति। उच्यते च श्रीहरिणा वाक्यपदीये—

परेषामसमाख्येयमभ्यासादेव जायते।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम्॥ इति[1]।

नन्वेषामनया रीत्याऽलौकिके तत्साक्षात्कारे उपयोगेऽपि किमेतेनात्मसाक्षात्कारेणाद्यतने काले वैज्ञानिक इति चेत्? अत्र ब्रूमहे—तदैव पुरुषः स्वस्थो भवति, यदाऽनेनात्मा साक्षात्कृतः स्यात्। स्वस्मिन्नात्मन्यात्मीये (शरीरे) वा तिष्ठतीति स्वस्थपदस्य व्युत्पत्तिरात्मनि साक्षात्कृत एव चरितार्था स्यात्, तदैव च वास्तविकी स्वस्थता सम्पद्यते। अमुमेव भावं पुरस्कृत्योक्तं श्रीमद्भागवते—

मर्त्यो मृत्युव्यालभीतः पलायँल्लोकान् सर्वान्निर्भयं नाध्यगच्छत्।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति॥ इति।

अत्र 'त्वत्पादाब्जं प्राप्य' इत्यनेनात्मदर्शनपूर्विका परात्मनि प्रपत्तिरुक्ता; 'शेते' इत्यनेन भक्त्यर्थं कल्पितद्वैतरूपाज्ञानावस्थायां परमाऽऽनन्दावाप्तिः सूचिता; 'मृत्युरस्मादपैति' इत्यनेन जननमरणाविच्छेदलक्षणायाः संसृतेरात्यन्तिकमुन्मूलनं चोक्तम्। आत्मदर्शनेनात्मस्थस्यैवैतत्फलद्वयं सम्भवतीति भावः।

किञ्चेदृशः स्वस्थ एवात्माराम इत्युच्यते, परमानन्दभाक् च स एव। उक्तं च श्रीभागवते—

सन्तुष्टस्य निरीहस्य ह्यात्मारामस्य यत्सुखम्।
कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः॥ इति।

श्रुतिरपि च—"आत्मक्रीड आत्मरतिः" इति। नह्यात्मद्रष्टाऽनात्मसु विषयेषु स्वप्नेऽपि रमते, नाऽपि च रन्तुमिच्छति। इयमेव परमा स्थितिः, अयमेव च

---

१. वा० प०—१।३५।

सर्वाधिको लाभः। उक्तं च भगवता श्रीकृष्णेन—"यं लब्ध्वा चापरं लाभं मन्यते नाऽधिकं ततः" इति।

अतश्चास्मिन् सच्चिदानन्दरूपे स्वरूपभूतात्मनि दृष्टे एवेहामुत्र च शाश्वतिकं कल्याणमुदियादिति शम्॥

यस्मिन् विमुखतां याते श्रवणादिविधिर्वृथा।
यस्मिन् सम्मुखतां याते श्रवणादिविधिर्वृथा॥
तस्मिन्निरस्तसकलप्रपञ्चे परमे पदे।
मनो निविशतां सद्यः परावरविवर्जिते॥



# श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च

दार्शनिकसार्वभौमः स्वामी श्रीवासुदेवाचार्यः, रामानुजवेदान्तशास्त्राध्यापकचरः,
वा० सं० वि० वि०, वाराणसी ।

न केवलं मनुष्याः, अपि तु सर्वे प्राणिनः सुखान्यभिलषन्तो दुःखञ्च जिहासवो भृशं प्रयतमाना अपि तयोर्वास्तविकं रूपं तदुपायञ्चानवगच्छन्तो दुःखाभिभूता एव दृश्यन्ते । तानभिलक्ष्यैव—

एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥

इति मुनिरवोचत् । प्रलयकाले करणकलेवरादिविधुरान् अचित्प्रायान् जीवान् विलोक्य दयमानस्त्रिपादविभूतिस्थो भगवान् "एकोऽहं बहु स्याम्" इति संकल्प्य भूतभौतिकान् सृष्ट्वा—"हर्तुं तमः सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति" इत्युक्तप्रकारेण परमकारुणिको भगवान् अज्ञानान्धकारं दूरीकर्तुं सदसती च विवेक्तुं महाप्रदीपमिव ज्ञानप्रदीपरूपं तत्त्वहितपुरुषार्थावेदकं वेदराशिं चतुर्मुखाय ब्रह्मणे ददाति । तदुक्तम्—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति ।

तत्त्वहितपुरुषार्थावेदकेषु वेदेषु तत्त्वं चिदचिद्विशिष्टं ब्रह्म, हितं कर्मयोग-भक्तियोगज्ञानयोगाद्युपायराशिः । पुरुषार्थाः—पुरुषैरर्थ्यमाना धर्मार्थकाममोक्षाख्याः पुरुषार्थाः प्राधान्येन निरूपिताः । एतन्मूलकमेव पठ्यते—

प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥
वदन्ति सकला वेदाः सेतिहासपुराणकाः । इति ।

गीतायां भगवताऽप्युक्तम्—"वेदैश्च सर्वैरहमेव वेद्यः" इति । तस्माद् भगवतः स्वरूपरूपगुणविभूतीरधिकृत्यैव वेदाः प्रवृत्ता इति निश्चप्रचम् । वेदार्थनिर्णया-यैव महर्षिणा जैमिनिना द्वादशभिरध्यायैः कर्ममीमांसादर्शनम्, काशकृत्स्नेन चतुर्भि-

रध्यायैर्दैवमीमांशादर्शनम्, मतान्तरेण जैमिनिनैव वा भगवता बादरायणेन चतुर्भिरध्यायैर्ब्रह्ममीमांसादर्शनञ्च निर्मितम्। कर्मदेवब्रह्ममीमांसाभेदेन त्रैविध्यमापन्नमपि मीमांसादर्शनमेकव्याख्येयव्याख्यानत्वादेकशास्त्रमिति संहितमेतच्छारीरिकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति भगवता बोधायनेनाभिहितम्।

आसीत् पुरा भारतवर्षस्यैतादृशोऽपि हिरण्यमयोऽवसरः, यत्र "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इति विधिना द्विजबालकानुपनीय "स्वाध्यायोऽध्येतव्यः" इति कर्तृसाकाङ्क्षविधौ तान् कर्तृत्वेन नियोज्य "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्॥ अत ऊर्ध्वं तु छन्दांसि शुक्लपक्षेषु संपठेत्। कृष्णपक्षे तदङ्गानि" इति कालविभागेन शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतस्य साङ्गस्य वेदस्याध्ययनं सम्पाद्यते स्म।

स च कालोऽप्यतीतः, यत्र मोक्षहेतुभूतवेदान्तोदितपरविद्याश्रवणमनननिदिध्यासनैरात्मनोऽपरोक्षावभाससम्पादनाय औपनिषदपुरुषोपासनायां निरता मुनयः शान्ताः "अत्र ब्रह्म समश्नुते" इति श्रुत्युक्तरीत्या उपासनवेलायामेव ब्रह्मापरोक्षयन्तो जीवन्मुक्तपदभाज आसन्। अशान्तस्य कुतः सुखम्, शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिरिति रागद्वेषादिरूपाणां मनसो ग्रन्थीनाम्, पुण्यपापादिरूपकर्मणाम्, सर्वानर्थमूलभूतानाद्यविद्यासञ्चितकर्मकृतप्रकृतसम्बन्धानां च निवृत्तिमन्तरेण कुत आध्यात्मिकं सुखं शान्तेश्च प्रत्याशा। अत एव श्रुतिरुपदिशति—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

परे ब्रह्मादयो यतोऽवरे भवन्ति तस्मिन् परमपुरुषे ब्रह्मणि दृष्टे सत्येव हृदयस्य रागादिग्रन्थिर्भिद्यते, संशयविपरीतबुद्धयो नश्यन्ति, पुण्यपापरूपाणि कर्माणि क्षीयन्त इति तद्दर्शन एव यत्नो विधेयः। श्रुतिश्च तद्दर्शनार्थं निदिध्यासनं विधत्ते। "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इति स्मृतिः कथं भावाकाङ्क्षां पूरयति। भ्रमप्रमादविप्रलिप्साकरणापाटवादि-पौरुषेयदोषरहितेभ्योऽपौरुषेयश्रुतिभ्यः श्रोत्रियब्रह्मनिष्ठाचार्यादेव न्याययुक्तार्थ-ग्रहणरूपं श्रवणं कर्तव्यमिति वदति। स्वाध्यायोऽध्येतव्य इत्यत्र स्वाध्यायस्यार्थपर-त्वेनाधीतवेदस्य पुरुषस्य प्रयोजनवदर्थावबोधित्वदर्शनेन तन्निर्णयाय स्वयमेव प्रवर्त-नात् श्रवणं प्राप्तम्। श्रवणप्रतिष्ठापनार्थत्वाद् आचार्य्योपदिष्टार्थस्य उपक्रमोपसंहारा-भ्यासापूर्वताफलार्थवादोपपत्तिभिः षड्भिस्तात्पर्यनिर्णायकैर्लिङ्गैरेवमेवेति निर्द्धा-रणरूपं मननमप्यनुवाद एव। मननाभावे उपदेष्टुः प्रजापतेः श्रोत्रियब्रह्मनिष्ठत्वेऽपि तच्छिष्यो विरोचनोऽनर्थमेवेयात्। इन्द्रश्च मननेन कृतकृत्योऽभवत्। तस्मादात्मा वाऽरे द्रष्टव्य इति श्रुतौ निदिध्यासनरूपं ध्यानमेव विधीयते। ध्यानं च ध्रुवानु-स्मृतिरिति सैव तैलधारावदविच्छिन्नस्मृतिसन्तानरूपोपैति दर्शनसमानरूपताम्।

अत्र केचिदाचार्याः—अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसह-स्राणि, अन्तवदेवास्य तद्भवति, तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते—इत्यादिश्रुत्या कर्मणामनित्यफलत्वेन" ब्रह्मविदाप्नोति परम्, ब्रह्मविद् ब्रह्मैव भवति, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय-- इत्यादिश्रुत्या ज्ञानस्यैव मोक्षसाधनत्वप्रतिपादनाद् मुमुक्षोर्ज्ञान एव प्रवृत्तिः, "तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते"—इति स्मृत्या च अनभिसंहितफलविशेषकर्ममृदितकषायस्य कस्यचनमहाभागस्य विविदिषोत्पत्तौ सत्याम् "सदेव सौम्येदमग्र आसीत्, एकमेवा-द्वितीयम्, सत्यं ज्ञानमनन्तं ब्रह्म, निष्कलं निष्क्रियं शान्तम्, अयमात्मा ब्रह्म, तत्त्व-मसि" इत्यादिवाक्यश्रवणेनैवापरोक्षज्ञानमाविर्भवति, ततोऽविद्या निवर्तते। तदुक्तं नारदीये—"तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्।" अन्यत्र च—

तत्त्वमस्यादिवाक्योत्थमखण्डधीजन्ममात्रतः।
अविद्यासहकार्येण नासीदस्ति भविष्यति॥

इत्येतादृशवाक्यार्थोपयोगीन्येवान्तरङ्गसाधनानि श्रवणमनननिदिध्यासनानि। वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रियैव श्रवणपदेन बोध्यते। मननं च शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूल-तर्कात्मकज्ञानजनकमानसव्यापारः। निदिध्यासनं चानादिदुर्वासनया विषयेष्वा-

कृष्टस्य चित्तस्य विषयेभ्योऽप्याकृष्यात्मविषयकस्थैर्यानुकूलो मानसव्यापार एव। एतादृशं निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्साधनम्, "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेः।

अत्रेदमवधेयम्—"आनन्दो ब्रह्मेति व्यजानात्", "विज्ञानमानन्दं ब्रह्म" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", "आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन" इत्यादिश्रुत्युदीरितो निरतिशयब्रह्मानन्द एव शोकनिवर्तकः परमपुरुषार्थ इति। "तरति शोकमात्मवित्; विद्वान्नामरूपाद्विमुक्तः, ब्रह्मविद् ब्रह्मैव भवति" इत्यादिनाऽऽत्मवेदनरूपं ब्रह्मज्ञानम्, यदि तत्त्वमसि, अयमात्मा ब्रह्मेत्यादिवाक्यजन्यं वाक्यार्थज्ञानरूपमेव भवेच्चेत्, "विज्ञाय प्रज्ञां कुर्वीत, आत्मानमनुविद्य विजानाति" इत्यादिश्रुत्या विज्ञानोत्तरमुपासनात्मकप्रज्ञाया विधानं व्यर्थमेव स्यात्, अधीतसाङ्गसशिरस्कवेदस्य व्युत्पत्तिमतः पुरुषस्य तादृशवाक्यात् तादृशवाक्यार्थज्ञानं विधानमन्तरेण स्वत एव सम्भवात्। अतोऽत्र वेदनपदेन वाक्याद् वाक्यार्थज्ञानमूलकोपासनमेवावगन्तव्यम्। ततश्च विज्ञाय, अनुविद्येत्यादौ ल्यपा विज्ञानोत्तरं प्रज्ञानरूपोपासनस्य, अनुवेदनोत्तरं विज्ञानरूपोपासनस्य च विधानं स्वरतः संगच्छते। अत एव भगवतो वेदव्यासस्यैकव्यवहितशिष्यो भगवान् बोधायनोऽपि—"वेदनमुपासनं स्यात् तद्विषये श्रवणात्, सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनं वेदितव्यम्" इत्युक्तवान्।

ध्रुवानुस्मृतिरूपाया उपासनायाः साधनान्यपि तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्चेत्यादिनावोचत्। जात्याश्रयनिमित्ताददुष्टादन्नात् कायशुद्धिर्विवेकः, विमोकः कामानभिष्वङ्गः, आरम्भणसंशीलनं पुनः पुनरभ्यासः, पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियासत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वं दया, करणत्रयेण परपीडानिवृत्तिरिति विवेकः।

एवञ्चात्मा वाऽरे द्रष्टव्य इत्यादिना जगज्जन्मस्थितिलयादिहेतोः परस्य ब्रह्मण एवोपासनं विहितं भवति। "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति कोशादात्मशब्दस्यानेकार्थत्वेऽपि ध्यानविधिबलेनात्र ब्रह्मण एव ग्रहणम्, कारणं तु ध्येय इति श्रुतेः। ध्यानोपासनादिकं कारणस्यैव कर्तव्यमिति वेदान्तसूत्रकृतोऽप्यभि-

मतम्। अत एव "अथातो धर्मजिज्ञासा, चोदनालक्षणोऽर्थो धर्मः" इति सूत्रनिर्माण-पद्धतिमुपेक्ष्य "अथातो ब्रह्मजिज्ञासा, जन्माद्यस्य यतः" इत्युपादानकारणबोधकं यत इति पदघटितं सूत्रं प्रणीतवतः सूत्रकारस्य कारणतावच्छेदकस्यैव ध्येयतावच्छेदकत्वा-भिमतिः प्रतीयते। अतः सद्ब्रह्म-आत्म-नर-पुरुष-पुरुषोत्तमादिपदप्रतिपाद्यस्य जगत्कारणत्वं श्रुतिस्मृतीतिहासपुराणादिषु प्रतिपादितं दृश्यते। अत एव पुरुषसूक्तादिषु भगवतो दिव्यगुणविशिष्टस्य कारणत्वमुपपाद्य "य एवं विद्वान् अमृत इह भवति; तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतावेव पदप्रयोगेण सगुणस्यैवोपास्यत्वमायाति। अत एव संहितादिषु स्थूलसूक्ष्मपरभेदेन त्रिविधोपासनं विहितम्।

स्थूलं चाष्टभुजं प्रोक्तं सूक्ष्मं प्रोक्तं चतुर्भुजम्।
परं तु द्विभुजं प्रोक्तं तस्मादेतत्त्रयं यजेत्॥

इत्यादिना, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः" इत्यादावात्मशब्दवाच्यब्रह्मणः कारणत्वप्रतिपादनवत्।

नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः।
तानि तस्यायनं पूर्वं तेन नारायणः स्मृतः॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ततस्तस्यायनं पूर्वं तेन नारायणः स्मृतः॥

इत्यादिस्मृतिषु नरशब्दवाच्याद् ब्रह्मणः सृष्टिरभिहितेत्यनुसन्धेयम्॥

# श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च

श्रीदेवस्वरूपमिश्रः, ( सीनियर-रिसर्च-फेलो ) वा० सं० वि० वि०, वाराणसी।

येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु।
तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम् ॥

## श्रवणम्

अथ श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च प्रदर्श्यते। तत्र प्रथमं क्रमप्राप्तं श्रवणस्वरूपमेवोपवर्ण्यते। यतो हि ज्ञायमानमेव वस्तु साध्यसाधकभावेनोपगृह्यते। तथा चोक्तम्—"जानाति, इच्छति, ततो यतते" इति। श्रवणमनननिदिध्यासनानाम् "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या "आत्मा वाऽरे द्रष्टव्यः" इति श्रुतिप्रतिपादितदर्शनमनूद्य विधीयमानानां कर्तव्यत्वेनावधारणात् तेषां स्वरूपोपवर्णनमावश्यकमेवेति न तिरोहितं विदुषाम्। गीतास्वपि भगवता श्रीकृष्णेनार्जुनं निमित्तीकृत्य सर्वजनान् च लक्ष्यीकृत्य प्रोक्तम्—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ इति।

अत्रोपदेशपदेनैव श्रवणलाभः। नवधाभक्तिपरिगणनेऽपि श्रवणस्यैव प्राथम्यमिति नात्र ततोऽन्यथा प्रथा प्रभवेदिति प्रथमं श्रवणस्वरूपोपबृंहणं क्रियते। तत्रेत्थमत्र क्रमो ज्ञेयः—प्रथमतः स्वस्ववर्णाश्रमोचितकर्मानुष्ठानेन निर्गतनिखिलकल्मषतया निर्मलस्वान्तः साधनचतुष्टयसम्पन्नः सन्—

कदाचिच्छुद्धभावेन गङ्गातीरे कृतं तपः।
तत्पुण्यपरिपाकेन मुमुक्षा जायते शुभा॥

इत्युक्तेर्मुमुक्षया अनेकजन्मार्जितपुण्यपुञ्जप्रभावप्राप्तया युक्तः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपगच्छेत्। तथा चोक्तमध्यात्मरामायणे रामेण लक्ष्मणं प्रति ज्ञानप्राप्तिक्रमोपदेशावसरे—

आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः।
समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत् सद्गुरुमात्मलब्धये॥ इति।

एवं चेदमत्राकूतम्—"तद्विज्ञानार्थं गुरुमभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतिबोधितगुरुशरणावाप्तेः पूर्वमाचार्योक्तवाक्यजन्यज्ञानग्रहण-योग्यता सम्पादनीयैव। सा च साधनचतुष्टयसम्पन्नत्वरूपा शुद्धमानसत्वरूपा च। तदनन्तरं गुरोः पार्श्वे गमनम्। ततश्च श्रवणस्यारम्भावसर इति प्रसरः। अत एव तस्मै विद्वानुपसन्नाय प्राह" इति श्रुतेरनुशासनम्। एवं कृतमेव श्रवणं साक्षात्काराय कल्पते, नान्यथेति वेदान्तरहस्यम्।

अथ श्रवणस्वरूपं निरूप्यते—श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्या-वधारणानुकूला मानसी क्रियेति वेदान्तपरिभाषाकृतः। वेदान्तसारेऽपि—षड्विध-लिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणम्। षड्लिङ्गानि च—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ इति।

किन्तु नेदं सार्वजनीनं लक्षणम्, यतो हि लक्षणस्य लक्षणमसाधारणधर्म इति। असाधारण्यञ्च—लक्ष्यताऽवच्छेदकसमनियतत्वम्। नेदं तथा लक्षणं श्रवणस्य, यतो हि येषां मते सद्वितीये ब्रह्मणि वेदान्तानां तात्पर्यम्, तेषां मते श्रवणेऽव्याप्तिः। अतः केवलमद्वैतमतावलम्बिनामेव लक्षणमिति कृत्वा न सर्वथाऽस्य सर्वलक्ष्यसंग्राह-कत्वमिति दोषे प्रसक्ते विवरणानुसारं श्रवणस्येदं लक्षणं भवति। तथाहि "श्रवणं नाम—आचार्यमुखतः सर्ववेदान्तवाक्यानां षड्विधलिङ्गैः शक्तितात्पर्यनिर्णय इति न दोषशङ्कापङ्ककलङ्कावसरः। तथा चोक्तं विवरणप्रमेयसंग्रहे—

तत्र तावन्मुनिश्रेष्ठाः श्रवणं नाम केवलम्।
उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः।
सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात्॥ इति।

तथा विद्यारण्यस्वामिनाऽपि पञ्चदशीग्रन्थे—

वेदान्तानामशेषाणामादिमध्यावसानतः।
ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत्॥ इति प्रोक्तम्।

गुरोर्मुखादेव वेदान्तवाक्यानां शक्तितात्पर्यनिर्णयरूपं श्रवणं मुख्यमिति शास्त्र-कृतां महानाग्रहः। तथा चोक्तमध्यात्मरामायणे उत्तरकाण्डे श्रीरामचन्द्रेण लक्ष्मणं प्रति—

गुरोः सकाशादपि वेदवाक्यतः सञ्जातविद्यानुभवो निरीक्ष्य तम् ।
स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥ इति ।

एवमेवान्यत्रापि च श्रवणं गुरोः सकाशादेवामूलसंशयनिर्वचनपूर्वकं कल्याणकारीति प्रतिपादितम् । तथाहि—

तत्तदुत्प्रेक्ष्यमाणानां पुराणैरागमैरपि ।
अनुपासितवृद्धानां विद्या नैव प्रसीदति ॥ इति ।

सुरेश्वराचार्यैरपि—"श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नतः" इति प्रोक्तम् । एवं च श्रवणस्य महत्त्वं गीतम् । वेदान्तपरिभाषावेदान्तसारादिप्रोक्तं तल्लक्षणं न सर्वसंग्राहकम्, मतविशेषापेक्षितमात्रोपयोगित्वात् । अतो विवरणोक्तं लक्षणं शक्तितात्पर्यनिर्णयरूपमवस्थितम्, किन्तु लक्षणेऽस्मिन् पूर्वोक्तदोषवारणेऽप्यद्वैतमते नोपयोगः । यतो हि—

दृष्टा गुणक्रियाजातिसम्बन्धाः शब्दहेतवः ।
नात्मन्यन्यतमो ह्येषां तेनात्मा नाभिधीयते ॥

इत्यद्वैतसिद्धिकृत्कृतसिद्धान्तानुसारं शुद्धस्य ब्रह्मणोऽशब्दत्वेन शक्तितात्पर्यनिर्णयरूपस्य श्रवणस्य क उपयोग इति शङ्कासमुच्छेदाय समाधिरयं समर्थः । तथाहि—शुद्धस्याशक्यत्वेऽपि विशिष्टस्य शक्यत्वेन दोषाभावात् । तथा चोक्तमद्वैतसिद्धौ तृतीयपरिच्छेदे मधुसूदनस्वामिभिरस्यैव सन्देहसन्दोहस्य शोषणाय—"शुद्धे शक्त्यसंभवेऽपि विशिष्टशक्तेस्तद्बोधोपयोगिन्या अवधारणीयायाः सम्भवात् । तात्पर्यस्यापि संशयधर्मिनिश्चितत्वेन तत्रासंभवेऽपि संशयकोट्युपलक्षिते निर्विशेषे संभवेन विचारावैयर्थ्यात्" इति । अद्वैतसिद्धिटीकायां गौडब्रह्मानन्दाचार्यैः कृतायां प्रकृतग्रन्थव्याख्याकाले—"तद्बोधोपयोगिन्या अवधारणीयायाः" इत्यस्य वाक्यस्य व्याख्यावसरे—"शुद्धबोधोपयोगित्वेनावधारणीयायाः । विशिष्टशक्तिज्ञानाधीनविशिष्टोपस्थितौ सत्यामेव तदधीनशुद्धोपस्थित्या शुद्धप्रमोदयाच्छुद्धप्रमाप्रयोजकोपस्थितिविषयविशिष्टशब्दत्वेनावधारणं शुद्धबोधहेतुरिति भावः" इति प्रोक्तम् । ( अद्वैतसिद्धितृतीयपरिच्छेदे ८६५, ८६६ पृष्ठयोः )

अतः श्रवणस्य निर्दुष्टं लक्षणमिदम्—शक्तितात्पर्यनिर्णय इति । तत्र साक्षात्कारोपयोगिश्रवणलक्षणमपेक्षितमतः सर्ववेदान्तवाक्यान् गुरुमुखादित्ययमप्यंशो नानुपयुक्त इति युक्तियुक्तं पश्यामः ।

मननम्

मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूल-तर्कात्मकमानसो व्यापारः। अत एवोदयनाचार्यैः कुसुमाञ्जलौ—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणान्तरमागता ॥

इति रूपेणोपस्थापितम्। वेदान्तसारेऽपि—"मननन्तु श्रुतस्याद्वितीयस्य वस्तुनो वेदान्तानुगुणयुक्तिभिरनुचिन्तनम्" इति। विवरणप्रमेयसंग्रहेऽपि—"वाक्यानु-ग्राहकन्यायशीलनं मननं भवेत्" इति। तत्र वाक्यपदेन वेदान्तवाक्यम्, तस्यानु-ग्राहको न्यायः पञ्चावयवाः प्रतिज्ञादयो मननपदवाच्याः। भोः भोः धीधनाः? अस्यैव मननस्य प्रभाव आसीद् यत् केवलं श्रवणेन संतुष्टो विरोचनोऽनर्थं प्राप्तवान् शरीरमेवात्मेति गुरोः सकाशाच्छ्रुत्वा तथैव प्रतिपेदे, न चेन्द्रः। इन्द्रो हि श्रवणं कृत्वैव न विरराम, किन्तु मननमपि चकार। अतः पुनर्गुरोः सकाशात्कृतोपदेशः प्राप्तवानात्मस्वरूपम्।

निदिध्यासनम्

"निदिध्यासनं नामानादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽप-कृष्यात्मविषयकस्थैर्यानुकूलो व्यापारः" इति वेदान्तपरिभाषाकृतः। वेदान्तसारे तु—"विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः" इति प्रोक्तम्। विवरण-प्रमेयसंग्रहे तु—'निदिध्यासनमैकाग्रयं श्रवणे मननेऽपि च। निदिध्यासनसंज्ञं च···" इत्यादि प्रतिपादितम्। एवं च तत्तदाचार्यचर्चितस्वरूपमेव मननादीनामत्र मया प्रदर्शितम्, न नूतनं किञ्चिदिति जानन्तु मान्याः। एषां च सदाऽभ्यासो विधेय इति बोध्यम्। तथा चोक्तम् "आवृत्तिरसकृदुपदेशात्" इति ब्रह्मसूत्रे।

अथ "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते", "विना प्रयोजनं चेष्टा न कुर्याद्धस्तपादयोः" इति, "न कुर्यान्निष्फलं कर्म" इति सूक्त्या चैषा श्रवणादीनां प्रयो-जनं किम्? क उपयोग इति जिज्ञासायां तत्समाधानाय प्रयत्यते—तत्र "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतौ पाठक्रमादर्थक्रमो बलीया-निति न्यायेन द्रष्टव्य इति विधिच्छायावचनस्य पश्चादर्थोपस्थानेन दर्शनमेषां फलम्। दर्शनमनूद्य श्रवणादीनामुपादानमिति ग्रन्थेषु वर्णनादिमानि त्रीणि ब्रह्मज्ञान-

साधनानि। ब्रह्मज्ञानं च परमावश्यकमिति श्रुतिरेव वदति—"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" इति ब्रह्मज्ञानेनैव समूलाविद्यानिवृत्तिप्रयुक्ताखिलदुःखनिवृत्तिपूर्वकपरमानन्दावाप्तिरूपः परमपुरुषार्थो मोक्षाख्यो लभ्यते। "ऋते ज्ञानान्न मुक्तिः", "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" त्यादिश्रुतयोऽपि ब्रह्मज्ञानस्यैव महत्त्वं गायन्ति। "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते", "ज्ञानी त्वात्मैव मे मतम्" इति स्मृतयोऽपि तथैव। अतस्तादृशस्य ज्ञानस्य साधनानि श्रवणादीनि कथं न स्तुत्यानि भवेयुः ?

इदमत्र सारम्—"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति गीतोक्तेः, तथाप्रतिपादकश्रुतेश्च ज्ञानस्य प्रतिबन्धकमज्ञानम्। तच्च द्विविधम्—असत्त्वापादकमज्ञानम्, अभानापादकञ्च। तत्र "तत्त्वमसि" इत्यादिमहावाक्यश्रवणेन जायमानपरोक्षात्मज्ञानम् "नास्ति ब्रह्म" इत्याकारकभावनाप्रयोजकमसत्त्वापादकमज्ञानं नाशयति, मनननिदिध्यासनाभ्याञ्च जायमानमपरोक्षात्मसाक्षात्कारोऽभानापादकम्—न ब्रह्म भातीत्याकारकमज्ञानं नाशयति। असम्भावनाविपरीतभावनेऽपि मनननिदिध्यासनाभ्यामेव नश्यत इति प्रतिपादितं विवरणप्रमेयसंग्रहे तल्लक्षणपूर्वकं प्रथमवर्णके इति नेह प्रतन्यते।

यद्यप्यन्वयव्यतिरेकव्यभिचारप्रदर्शनेन श्रवणस्य साक्षात्कारं प्रति न कारणत्वमिति पूर्वपक्षरूपेण तत्र तत्र ग्रन्थेषूपलभ्यते—कृतश्रवणस्यापि साक्षात्कारादर्शनादन्वयव्यभिचारः, अकृतश्रवणस्यापि वामदेवस्य गर्भस्थस्य साक्षात्कार इति व्यतिरेकव्यभिचार इति, तथापि न दोषः; कृतश्रवणस्थले श्रवणसत्त्वेऽपि मनननिदिध्यासनयोरभावेन दोषाप्रसक्तेः; मनननिदिध्यासनसहकृतस्यैव श्रवणस्य साक्षात्कारं प्रति कारणत्वात्। वामदेवस्थलेऽपि न व्यभिचारः, जन्मान्तरे कृतश्रवणात्; "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इति गीतोक्तेः।

अत्रेदमवशिष्यते—यत्साक्षात्कारं प्रति त्रिष्वेषु श्रवणमनननिदिध्यासनेषु किं साक्षात्कारणं किं परम्परयेत्यद्वैतसिद्धौ तृतीयपरिच्छेदे वेदान्तपरिभाषायां च प्रयोजनपरिच्छेदे वर्णितमिति, ततोऽवधेयम्। एषां विधानं वा नियमो वेति विचाराः सिद्धान्तलेशसंग्रहेऽप्पय्यदीक्षितैः शिक्षिताः।

शिष्टताव्यक्तिजननीमन्तरायततिशमनीं चितिस्तवीं विदधता श्रीमता श्रीहर्षेणापि हर्षेण श्रवणादीनां साक्षात्कारं प्रति कारणत्वमङ्गीकृतम्। तथाहि—"अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु। ईश्वरमुमया न परं वन्दे नु मयापि तमधिगतम्॥" इति मङ्गले श्लोके। तत्र 'श्रुतोऽस्ति' इत्यनेन श्रवणस्य, अनुभयेति च्छेदेन सम्प्रदायलब्धेन मननस्य च लाभात्। अधिगतमित्यनेन साक्षात्कृतं तेनेति न तिरोहितम्। खण्डनेऽग्रेऽपि तेन—वस्तुतस्तु वर्णसर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थ पन्नविनिवृत्ता इति ग्रन्थेनोक्तम्। नैषधीयचरितेऽपि सर्गान्ते "यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम्" इत्यादि।

मानमेयोदयेऽपि साक्षात्कारपद्धतिः प्रदर्शिता निदिध्यसनावसना—

निषिद्धकाम्यकर्मभ्यः सम्यग् व्यावृत्तचेतसः।
नित्यनैमित्तिकप्रायश्चित्तप्रध्वस्तदुष्कृतेः॥
सुखदुःखानुभूतिभ्यां क्षीणप्रारब्धकर्मणः।
युक्तस्य ब्रह्मचर्याद्यैरङ्गैः शमदमादिभिः॥
कुवार्णस्यात्ममीमांसां वेदान्तोक्तेन कर्मणा।
मुक्तिः सम्पद्यते सद्यः ................ ॥ इत्यादिना।



# विज्ञानाद्वयवादब्रह्माद्वयवादयोर्वैलक्षण्यम्

श्री पी० बी० अण्णङ्गराचार्यः, शिरोमणिः, श्रीस्वामीनारायणसंस्कृतपाठशाला-
प्रधानाध्यापकः, बड़ताल, खेड़ा (गुजरात)।

## किं नाम विज्ञानम्?

विज्ञानाद्वयवादब्रह्माद्वयवादयोर्वैलक्षण्यं जिज्ञासमानैरिदमेव तावत् प्रथमं विजिज्ञास्यं भवति विवेचकैः किं नाम विज्ञानम्? किं ब्रह्मेति? नह्यनवगतवस्तुस्वरूपास्तदीयविशेषविमर्शे प्रवर्तमानाः प्रेक्षावन्तो दृष्टचराः प्रथममेव। विज्ञानशब्दो हि विपूर्वाज्ज्ञानातेर्भावे ल्युटि निष्पन्नो भवति शाब्दिकप्रक्रियया। व्युपसर्गबलाच्चावगम्यते ज्ञाने विशेषः। स च भवतु विशेषो वैविध्यलक्षणः, विशेषाकारविषयकत्वलक्षणः, अन्यो वा कश्चित्।

ज्ञानं नाम ज्ञातुर्ज्ञेयावभासहेतुर्धर्मविशेष इति प्रतियन्ति लौकिका बहुलं प्रमाणतन्त्रपरतन्त्राश्च। "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इति गौतमः। बुद्धितत्त्वस्येन्द्रियद्वारा बहिः प्रसृतस्य विषयाकारपरिणामो ज्ञानमिति कापिलाः पातञ्जलाश्च। तत्तद्विषयाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यं ज्ञानमिति चाद्वैतिनः। अस्तु यथा तथा। सर्वविषयव्यवहारहेतुर्ज्ञानमित्यत्र न विवादो वादिनाम्।

व्यवहाराधीना हि लोकयात्रा। व्यवहारे च मूलं विज्ञानमिति लोकयात्रोपयोगि विज्ञानमेव शरणं व्यवहारपथे प्रवर्तमानानामिति निर्विचिकित्समेतत्। जगद्यात्रोपयोगि चेदं विज्ञानं भगवतैव प्रवर्तितमिति श्रूयते "प्रज्ञा च तस्मात् प्रसृता पुराणी" इति। गीतं च भगवतैव "मत्तः स्मृतिर्ज्ञानमपोहनं च" इति।

वस्तुतत्त्वपक्षपातित्वाज्ज्ञानानां यथावस्थितवस्तुव्यवहारहेतुत्वलक्षणं प्रमात्वमेव नैसर्गिकम्। अप्रमात्वं तु दोषमूलमित्यामनन्ति त्रयीवृद्धा उभयेऽपि कर्ममीमांसका ब्रह्ममीमांसकाश्चेति। आस्तां नाम प्रासङ्गिकोऽयं प्रस्तावः।

ज्ञानं विज्ञानमिति च पृथग् निर्दिश्यते लोके शास्त्रे च बहुलं तत्र तत्र। "ज्ञानं तेऽहं सविज्ञानम्" इति च गीतायां भगवद्वचनम्। सामान्यविशेषात्मके वस्तुनि सामान्यतो ज्ञानं ज्ञानमिति, विशेषतो ज्ञानं विज्ञानमिति वैवदिकोऽयं व्यपदेशभेदः

प्रतीयते। एकरूपत्वादात्मतत्त्वस्याध्यात्मज्ञानं ज्ञानमिति, विविधत्वाद् भूतानां भौतिकज्ञानं विज्ञानमिति च काचन जायते विवक्षा। श्रुतिः स्मृतिश्च मुक्तिसाधनमध्यात्मज्ञानं निरुपपदेनैव ज्ञानमित्यादिपदेन प्रायो निर्दिशतः "ऋते ज्ञानान्न मुक्तिः", "सा विद्या या विमुक्तये" इति। "संज्ञायते येन तदस्तदोषं नित्यं परं निर्मलमेकरूपम्। संदृश्यते वाऽप्यधिगम्यते वा तद् ज्ञानमज्ञानमतोऽन्यदुक्तम्॥" इति च भगवान् पराशरः।

## कोऽयं विज्ञानाद्वयवादः ?

विज्ञानयुगे त्वस्मिन् भौतिकज्ञानान्येव विज्ञानशब्देन संशब्द्यन्ते; भौतिकशास्त्रमेव विज्ञानशास्त्रमिति समाद्रियतेतरां नवीनैः, परं वयमिदानीं न भौतिकविज्ञानमधिकृत्य विवक्षवः किञ्चित्, किन्तु प्राचीनाचार्यपरिशीलितां विज्ञानपद्धतिमधिकृत्यैव। उक्तमेतद् विषयव्यवहारहेतुर्विषयवित्तिर्ज्ञानम्। विशेषाकारविषयं तदेव विज्ञानमिति। वैविध्याद्विषयाणां तज्ज्ञानान्यपि भवन्ति नानैव, विषयभेदादभिन्नेऽपि विषये ज्ञातृभेदात्, एकस्मिन्नपि ज्ञातरि कालभेदात्, प्रत्यक्षत्वादिस्वगतधर्मभेदाच्चेति स्थिते कोऽयं विज्ञानाद्वयवादो नामेति तावदिदम्प्रथमसंभवैका विचिकित्सा।

अपरा चेयं विचिकित्सा विज्ञानं ब्रह्म चैकमेव, उताहो नैकम्? यद्याद्यः कल्प उररीक्रियेत, तर्हि न विज्ञानाद्वयब्रह्माद्वयवादयोर्निर्वोढुं शक्येत वैलक्षण्यम्। यद्यन्त्यः, तर्हि किं विज्ञानशब्दितं तत्त्वम्, किं वा ब्रह्मशब्दितमिति तु मीमांस्यमेव।

अन्या चेयं विचिकित्सा—विज्ञानाद्वयशब्देन किं ज्ञानद्वयनिषेधो विवक्षितः, आहोस्विद् विज्ञानाद्वयं जगदिति जगतो विज्ञानात्मकता, विज्ञानातिरिक्तनिषेधो वेति। ब्रह्माद्वयशब्देऽप्येवमेव कल्पनीयो विकल्पनाप्रकारः।

अत्र ब्रूमः—दर्शनग्रन्थेषु तावच्छ्रूयमाणेषु द्विविधोऽयं विज्ञानाद्वयवादः समारोहति श्रोत्रपथम्—योगाचाराभिमत एकः, अपरश्च वेदान्तवेद्यः। द्वितीयेऽपि सम्भवति द्वैविध्यं विज्ञानाद्वयवादे। वेदान्ततदुपबृंहणेषु हि विज्ञानशब्दः प्रयुक्तो जीवात्मनि परमात्मनि च तत्र तत्र। यथा—"विज्ञानं यज्ञं तनुते", "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः", "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इत्यादिषु तावन्निर्दिष्टो जीवात्मा विज्ञानशब्देन। निर्दिष्टं च

भगवतैव क्षेत्रज्ञस्वरूपं ज्ञानशब्देन "ज्ञानं ज्ञेयं ज्ञानगम्यम्" इति; "ज्ञोऽत एव" इति ज्ञातृत्वैकस्वभावत्वमात्मनो व्यवस्थाप्य ज्ञानव्यपदेशस्तस्य ज्ञानगुणसारत्वनिबन्धन इति समर्थितं च सूत्रकृतैव। ज्ञानवत् स्वयम्प्रकाशत्वाज्ज्ञातुरात्मनो ज्ञानव्यपदेशः सम्भवत्येवेति च स्थापितं पूर्वाचार्यैः। परमात्मनश्च ज्ञानव्यपदेशः स्पष्ट एव, "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म", "प्रज्ञानं ब्रह्म" इत्यादौ। तत्र विज्ञानशब्देन जीवात्मनो विवक्षायां जीवात्माद्वयवादो भवति विज्ञानाद्वयवादः। परमात्मनो विवक्षायां च परमात्माद्वयवादो भवति सः। निरूपयामस्तावद्वादत्रयमेतद्यथाक्रमम्।

## योगाचाराभिमतो विज्ञानवादः

योगाचाराभिमतो विज्ञानाद्वयवादो यथा—तन्मते विज्ञानमेव तत्त्वम्। तदेवानादिवासनादोषाद् ज्ञातृज्ञेयतदवच्छिन्नज्ञानरूपतया प्रतीयते नाना। विज्ञानस्यैवाकारो नीलपीतादिः, न तु बाह्यः। नीलादिज्ञाने हि भासमाने नीलादिरेक एवाकारो भासते। स वित्तेर्वेद्यस्य वेति विचारणीयम्। यदि वेद्यस्य, तर्हि वित्तेराकारान्तरं वाच्यम्; न च तदुपलभ्यते। न च 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति नैयायिकमतं न्याय्यम्, बाह्यस्यान्तरज्ञानविशेषकत्वायोगादसम्बद्धस्य। न च विषयविषयिभाव एव सम्बन्धो वित्तिवेद्ययोरिति वाच्यम्; वित्तितादात्म्यातिरिक्तस्य विषयविषयिभावस्याद्याप्यनिरूपणात्। न च यज्ज्ञानं यज्जन्यम्, तत्तद्विषयमिति सुवचम्, इन्द्रियजन्यत्वेन नीलादिज्ञानस्येन्द्रियविषयत्वप्रसङ्गात्। न च वित्तौ स्वाकारसमर्पकत्वमेव वित्तिविषयत्वमिति सौत्रान्तिकमतं युक्तिमत्, क्षणिकवादे आकारसङ्क्रमणस्योपपादयितुमशक्यत्वात्। सम्बन्धान्तरासम्भवाच्च वेद्यस्य नीलादेर्वित्त्याऽभेद एव स्वीकार्य इति। अस्ति च युक्त्यन्तरं नीलादेर्ग्राह्यस्य ग्रहणाभेदे सहोपलम्भनियमलक्षणम्। नीलादिर्हि विना ज्ञानेन न भासते तज्ज्ञानाभिन्नः। यद्येन विना न भासते, न तत्ततोऽर्थान्तरम्। यथा मिथ्या( प्रतिबिम्ब )चन्द्रश्चन्द्रं विनाऽभासमानो न भिन्नश्चन्द्रादिति। उक्तं च "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति।

सोऽयं विज्ञानस्याकारो नीलादिरान्तरोऽपि वासनाख्यदोषबलात् प्रतीयते बाह्यवत्। किञ्च, यथा स्वप्ने न सन्ति बाह्यार्थाः, किन्तु ज्ञानमेव वासनावशात् प्रतीयते तत्तदर्थाकारेण। तथैव जाग्रदवस्थायामपीति।

अत्रेदमवधेयम्—योगाचारीये विज्ञानवादेऽस्मिन् विज्ञानाद्वयवादो न भवति, विज्ञानद्वयनिषेधपरः, क्षणिकविज्ञानसन्ततिरूपात्मनानात्वस्य तन्मतसिद्धत्वात्। किन्तु विज्ञानातिरिक्तबाह्यार्थप्रतिषेधपर एवेति।

विमृश्यते किञ्चिदत्र साम्प्रतम्—"इदमहमभिवेद्मि" इति त्रयं हि प्रतीयतेऽबाधितं वेद्यं वेदनं वेदिता चेति। तत्र वेद्यवेदितारावपलपतामेषां वित्तिमात्रे कोऽयं पक्षपात इति न विद्मः। किञ्च, निर्विषयं निराश्रयं च ज्ञानमनुपलब्धिपराहतम्, न च वाच्यं स्वाप्नवदिति। स्वाप्नजाग्रदवस्थज्ञानयोर्वैधर्म्यात्। स्वाप्नं हि कारणदोषजनितं बाधितविषयं च। न तथा जाग्रदवस्थमिति। किञ्च, स्वाप्नं ज्ञानं निर्विषयमपि न निराश्रयम्। स्वाप्नार्थसृष्टिवादिनां मते न निर्विषयमपि। सहोपलम्भनियमश्च वेद्यवित्त्यभेदसाधकाभिमतोऽप्रयोजकः, विनाऽप्यभेदेन संविदः स्वयंप्रकाशत्वमते सहोपलम्भस्यावर्जनीयत्वात्। एतेन विषयविषयिभावसम्बन्धस्य निरसनमपि निरस्तम्। अनुभवसिद्धस्यापलापायोगात्; अन्यथा वित्तेरप्यपलापप्रसङ्गादिति। निरास्थच्च योगाचारमतमेनद्भगवान् बादरायणः—"नाभाव उपलब्धेः", "न भावोऽनुपलब्धेः", "वैधर्म्याच्च न स्वप्नादिवत्" इति। किञ्च, द्रष्टुर्दृश्यस्य च स्थिरस्य विरहे स्मृतिप्रत्यभिज्ञादरिद्रं जगदिदं स्यादिति। सौगताभिमतोऽयं विज्ञानाद्वयवादो भिक्षुपादप्रसारणन्यायेन शून्यवादपर्यवसायीति नैव बहु मन्वते त्रय्यन्तवृद्धा वादमेनम्।

### वेदान्तसिद्धो विज्ञानाद्वयवादः

अथ प्रस्तूयते वेदान्तसम्मतो विज्ञानाद्वयवादो ब्रह्माद्वयवादश्च। निर्दिष्टमेतदधस्ताद् यत् तत्र तत्र वेदान्तेषु जीवात्मा परमात्मा च विज्ञानशब्दनिर्दिष्ट इति। अत्रेदं न विस्मर्तव्यम्—यदि विज्ञानशब्देन परमात्मा विवक्ष्यते, तर्हि तस्यैव परब्रह्मत्वाद्विज्ञानाद्वयवादब्रह्माद्वयवादयोर्दुर्निरूपं वैलक्षण्यमिति विज्ञानब्रह्मशब्दयोरर्थभेदः समाश्रयणीय इति।

विस्पष्टं वर्णितोऽस्ति विज्ञानाद्वयवादः पुराणरत्ने श्रीविष्णुपुराणे "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः॥" (२-१४-३१)। यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥ वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥ सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स

राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥" (२-१६-८५) इति चादिभरतरहूगणसंवादे। "तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥" इति च। अत्र 'निजकर्मभेदविभिन्न-चित्तैः' इति विशेषणेन कर्मान्वयी जीवात्मा प्रतीयते विज्ञानशब्दितः। प्रतीयते च 'तस्यात्मपरदेहेषु' इति स्वकीयत्वपरकीयत्वविशेषणाद् देहेषु प्रतिदेहमात्मभेदः।

दार्शनिकाश्च भूयांसो जीवात्मनानात्वपक्ष एव दरीदृश्यन्ते पक्षपातिनः। "जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥" इति साङ्ख्यकारिकायामीश्वरकृष्णः। "व्यवस्थातो नाना" इति च कणादो महर्षिः। श्रुतिश्च—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति बहूनां चेतनानामात्मनां नित्यानां सद्भावं श्रावयति। व्यवहारकाले जीवात्मनां नानात्वमभ्युपगतमद्वैतवादिभिरपि। सत्येवं बहुत्वे जीवात्मनां विज्ञान-शब्दितजीवात्माद्वयवादः कथं सङ्गमनीय इति जायत एव जिज्ञासा।

अत्रोच्यते—ब्रह्मैवाविद्यया एको जीवो भवति। तस्यैकस्य जीवस्याविद्या-कल्पिताः पुनरन्ये जीवाः स्वप्नदृश्यपुरुषतुल्याः। स्वप्ने हि द्रष्टा पुरुष एव सत्यः, दृश्यास्तु मिथ्याभूताः। "अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते। अजमनिद्र-मस्वप्नमद्वैतं बुद्ध्यते तदा ॥" इति माण्डूक्यकारिका चैकजीववादे भवति स्वरसगतिः। अयमेवैकजीववादो भवति विज्ञानाद्वयवादो विज्ञानशब्देन जीवात्मनो विवक्षा-याम्। अयमेको निर्वहणप्रकारोऽद्वैतमतप्रक्रियया।

अत्र केचित्—न जीवात्मा विज्ञानशब्दितः, किन्तु साक्षिचैतन्यमेव। तदेव सर्वविषयप्रकाशकम्। सत्यप्यन्तःकरणोपहितं चैतन्यं जीवसाक्षि, मायोपहितं चैतन्यमीश्वरसाक्षीति भेदे वस्तुत एकत्वात्तस्य विज्ञानाद्वयवादः कथ्यत इति।

अपरश्चायं विज्ञानाद्वयवादस्य निर्वहणप्रकारो विशिष्टाद्वैतसिद्धान्तप्रक्रियया विज्ञानशब्देन जीवात्मनो विवक्षायामेव। देवादिदेहाकारत्वं प्रतिषिध्य ज्ञानैकाकारत्व-मात्मनां निरूप्यते स्म विष्णुपुराणे—"तस्यात्मपरदेहेषु" इत्यादिकया चतुश्श्लोक्या। देवत्वादिविषमाकारदर्शिनस्त्वात्मसु देहात्माभिमानिनोऽतथ्यदर्शिन इत्युक्तम् "द्वैति-नोऽतथ्यदर्शिनः" इति। "पुमान्न देवो न नरो न पशुर्न च पादपः। चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ॥" इति च जीवात्मनां देवादिभेद एव निषिद्धः, न तु

स्वरूपभेदः, स्वरूपबहुत्वस्य "नित्यो नित्यानाम्" इति श्रुत्यन्तवाक्यसिद्धत्वात्। अन्यथा तु बहुविधव्यवस्थाविलोपः प्रसज्येत। "पुमानेको व्यवस्थित." इत्येकत्वनिर्देशश्च पुंसु एकप्रकारत्वपर एको व्रीहिरितिवत्। तज्जीवात्मनां स्वरूपतो बहूनामपि ज्ञानैकाकारत्वेन एकरूपत्वलक्षणमैक्यमेव विवक्षितं विज्ञानाद्वयवादेन।

प्रकृतिपरिणामविशेषदेहसम्बन्धरूपदोषरहितं सर्वमात्मस्वरूपं ज्ञानैकाकारत्वेन सममिति च भगवतैवोपवर्णितम्। विविधविचित्रदेहेषु विषमतया प्रतीयमानं देहसम्बन्धप्रयुक्तनानाविरुद्धधर्मवन्तमपि देहिनमात्मानं विषमाकाराणामौपाधिकत्वाद् ज्ञानैकाकारत्वेन समं पश्यन्ति पण्डिता देहात्मविवेकज्ञानिन इति च। न च साम्यं स्वरूपैक्यम्, किन्त्वेकप्रकारत्वमेव। अत्यन्तसाम्ये चैकत्वव्यवहारो मुख्य एव, पुरोहितोऽयं राजा संपन्न इतिवत्। अयमेव च विज्ञानाद्वयवादो योऽसौ विज्ञानशब्दितानां जीवात्मनां ज्ञानैकाकारत्वेनैकत्ववादः।

## ब्रह्माद्वयवादः

ब्रह्माद्वयवादोऽथ विविच्यते त्र्यन्तसिद्धः। यद्यपि बहुष्वर्थेषु प्रयुज्यते ब्रह्मशब्दः। तथाहि—"वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। "मम योनिर्महद् ब्रह्म" इत्यादौ मूलप्रकृतौ, "अक्षरं ब्रह्म परमम्" इत्यादौ जीवात्मनि; "परं ब्रह्म परं धाम" इत्यादौ परमात्मनि च प्रयुज्यते ब्रह्मशब्दः। तथापि न सर्वेषां ब्रह्मशब्दमुख्यार्थता न्याय्या, उपचारत एव निर्वाहात् तत्र तत्र प्रयोगस्य। तथाहि—ब्रह्मप्रतिपादकत्वादुपचरितवेदानां ब्रह्मत्वम्, ब्रह्मज्ञानसाधनत्वाच्च तपसाम्। "तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्मेति" इति हि श्रूयते। तथैवोपचरितं ब्रह्मत्वं प्रकृतेः सकलस्वकार्यव्यापनाद् ज्ञानबृहत्त्वाच्च प्रत्यगात्मनां निष्कृष्टस्वरूपाणाम्। परमात्मैव तु ब्रह्मशब्दस्य मुख्योऽर्थः, प्रवृत्तिनिमित्तपौष्कल्यात्। "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म", "बृहत्वाद् बृंहणत्वाच्च ब्रह्मेति परिपठ्यते" इति च निवर्चनम्। अनेन ज्ञायते निरतिशयं बृहत्त्वं बृंहणत्वं च प्रवृत्तिनिमित्तं ब्रह्मशब्दस्येति। तत्र बृहत्त्वं परममहत्त्वम्—व्यापकत्वम्, बृंहणत्वं च सर्वाध्यासाधिष्ठानत्वमिति केचित्। असङ्कोचेन स्वरूपतो गुणतश्च निरतिशयं बृहत्त्वं स्वरूपमहत्त्वमहागुणवत्त्वपर्यवसितम्, बृंहणत्वं च प्रकृतिपुरुषबृहत्त्वसम्पादकत्वं जगदेककारणत्वमोक्षप्रदत्वपर्यवसायीत्यन्ये। एवंभूतब्रह्मशब्दार्थश्च नारायण एवेति निर्णीतं श्रुतिस्मृतिभ्याम्, "नारायणः परं ब्रह्म तत्त्वं नारायणः परः", "वेदे भूरि प्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।

तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥" इति । अपारज्ञानशक्त्यैश्वर्यशालि सर्व-निर्वाहकं परं वस्त्वेकं प्राय: सर्वैरेवाङ्गीकृतम् । तदेव परं ब्रह्म । तदेव तत्त्वं शक्तिः प्रकृतिः, कालः, स्वभावः, दैवम्, कर्मेत्यादिना नाम्ना यथामति यथारुचि च व्यप-दिश्यते तैस्तैर्मतवादिभिरित्यास्तां नामैतत् । आह च भगवान् पराशरः—"एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम् ॥" इति ।

प्रसिद्ध एव च सकलजगदेककारणं परं ब्रह्मैकमेवाद्वितीयमिति ब्रह्माद्वयवाद औपनिषदो विशेषतो वेदान्तिनां गोष्ठीषु । तत्र ब्रह्माद्वयपदेन ब्रह्मद्वयनिषेधश्चे-द्विवक्षितः, तर्हि न विवादः कस्यचिदपि, द्वैतवादिभिरद्वैतवादिभिश्च परस्य ब्रह्मण एकस्यैव स्वीकृतत्वात् ।

ब्रह्माद्वयं जगदिति जगतो ब्रह्मानन्दताविषयश्च ब्रह्माद्वयवादः "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत", "अयमात्मा ब्रह्म", "ऐतदात्म्यमिदं सर्वम्" "ज्योतींषि विष्णुर्भुवनानि विष्णुः", "सर्वं विष्णुमयं जगत्", "स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः", "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिश्रुतिस्मृति-सूत्रसिद्धः ।

अनन्तशक्तेर्ब्रह्मण एव शक्त्या जडजीवेश्वररूपपरिणाम इति केषाञ्चिज्जगतो ब्रह्मानन्दतावादः । "ईश्वराव्याकृतप्राणैर्विराट् सिन्धुरिवोर्मिभिः । यत् प्रणृत्यदिवाभाति तस्मै सद्ब्रह्मणे नमः ॥" इति च सर्वानुगतसदद्वयवादः । समुद्रस्य फेन-बुद्बुदतरङ्गस्थानीया ब्रह्मणो जडजीवेश्वरभेदा इति यावत् । शुद्धं सच्चिदानन्द-रूपं परं ब्रह्मैव रत्यलाभेनैकाकित्वे स्वेच्छात एव स्वांशेषु केषुचिच्चैतन्यानन्दतिरोधा-पनेन नानारूपं भवद्रमत इत्यपरेषां ब्रह्माद्वयवादः । ब्रह्मैवानाद्यविद्यया प्राप्तनानाजीव-भावमविद्यानिवृत्तौ स्वरूपप्रतिष्ठं भवति । ब्रह्मनिष्ठमिथ्याभूताविद्याविलासत्वा-दचित्प्रपञ्चस्य मिथ्यात्वमेवेति त्वन्येषां विदितोऽस्ति ब्रह्माद्वयवादः । विशेष्यविशेषण-भावापन्नतत्त्वत्रयसङ्घातात्मकमिदं जगत् । स्वरूपस्वभाववैलक्षण्येऽपि तत्त्वानां चिदचितोर्ब्रह्मप्रकारतयैवावस्थिते ब्रह्मस्वरूपान्तर्भूतत्वाद् ब्रह्मस्वरूपानन्तर्भूतं न किञ्चिदिति च ब्रह्माद्वयवादः परेषाम् ।

अस्तु वा यथा तथा । व्यष्टिरूपाज्जगतोऽस्मात् परिमितशक्तेरपरिमितशक्ति-समष्टितत्त्वं परमस्ति किञ्चित् परब्रह्मशब्दितम् । तदधीनस्वरूपस्थितिप्रवृत्तिभेदं चेदं

जगद् व्यवस्थितमर्यादं प्रवर्तमानं तादधीन्यात् तदेवेति कथ्यते। ब्रह्माद्वयवादे चैवंभूते न वैमत्यं सम्भवदुदयं केषामपीति निश्चप्रचम्।

निरूपितवादद्वयवैलक्षण्यप्रयोजननिरूपणेन च परिसमापयामो निबन्धमेनम्। सर्वभूतसाम्यभावनाधानफलकं भवति विशिष्टाद्वैतसिद्धान्तप्रक्रियया कृतं विज्ञानाद्वयवादस्य निरूपणम्। सर्वेषु स्वात्मसाम्यदर्शनमेव हि पाण्डित्यकृत्यम्। समत्वभावनावन्तश्च प्रशंसिता ब्रह्मनिष्ठत्वेन भगवतैव। समत्वभावनया च मिथो मैत्रीभावः सुदृढः सुशीलितो भविष्यतीति। ब्रह्माद्वयवादनिरूपणं च भवति सामाजिकक्षेत्रे प्रवर्तमानां क्षेत्रज्ञानां सर्वेषां सौभ्रात्रभावनाधानफलकम्। "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति श्रुतौ च जगतो ब्रह्मात्मकतालक्षणब्रह्माद्वयानुसन्धानस्य शान्तिः फलं श्रुतम्। शान्तिश्च रागद्वेषादिदोषनिवृत्तिलक्षणा। तथा सर्वभूतेषु जुगुप्सानिवृत्तिः शोकमोहनिवृत्तिश्च ब्रह्माद्वयानुसन्धानस्य फलत्वेनानुशिष्टे ईशावास्ये। सहोदराणामिवास्माकं समेषां ब्रह्मकार्यत्वेन ब्रह्मात्मकत्वेन च सौभ्रात्रमेव हि स्वतः प्राप्तम्। तदेव भावनीयमिति। मिथः समत्वभावना मैत्रीभावना सौभ्रात्रभावना चैव सरललोकयात्रानिर्वाहाय समाजराष्ट्रोन्नत्यै परस्परसहकाराय चापेक्षिता नवीनयुगेऽस्मिन् नितरामिति नापरोक्षमिदम्।

मायिकविषयासक्तिनिवर्तनपूर्वकं परमात्मन्यासक्तिजननं च ब्रह्माद्वयवादस्य परमं फलमिति सर्वमनाकुलम्॥

# विज्ञानवादाद्वयवादयोर्वैलक्षण्यम्

श्रीशान्तिप्रसादो वेदाचार्यः, गोपालभवनम्, जामनगरम्, सौराष्ट्रम् ।

इह खलु जगति सर्वेष्वपि वादेषु धर्मेषु सम्प्रदायसिद्धान्तेषु च प्रबलैर्युक्त्यनुभवप्रमाणैर्नैकधा प्रतिपाद्यमानेष्वपि नैकतरस्यापि सर्वसम्मता निर्दोषा स्थितिः समुपलभ्यते । प्रत्युत, अनेकदोषदानैः खण्ड्यन्त एव । तामेतां स्थितिं वेदशास्त्रस्मृतिमूलेष्वास्तिकदर्शनेष्वपि यदि परिपश्यामस्तर्हि किमाश्चर्यं वेदबाह्येषु नास्तिकदर्शनेषु यदि स्याद्विरोधः । वेदादिप्रमाणैः प्रतिपादितेऽपि सिद्धान्ते प्रतिवादिभिस्तैरेव प्रमाणैः पूर्वसिद्धान्तः प्रतिक्षिप्यते । स्वकीयश्च सिद्धान्तः परैर्निर्दुष्टत्वेन संग्राह्य इति सर्वत्र दृश्यते । सकलैः सम्प्रदायवादिभिराचार्यैश्च वेदमूलोऽपि परस्य सिद्धान्तो वेदेनैव प्रमाणेन हेयत्वेन स्वीयश्च ग्राह्यत्वेन प्रतिपादितः । का कथा तर्हि श्रुतिस्मृतिप्रमाणरहितेषु बौद्धादिदर्शनेषु सर्वसाधारणजनैः प्रवेशमलभमानैस्तत्त्वरहिते विज्ञानवाद्यभिमते क्षणिकविज्ञाने, यत्र वस्तुन एव स्थिरता नास्ति, नास्ति च स्थिरकारणभावः कश्चित्, ऋते च कार्यकारणभावं कथं तत्र मनागपि मनो ध्रियेत ।

अतो योगाचाराभिमतो विज्ञानक्षणिकवाद आत्मख्यातिरूपो यथोपपादितः, ब्रह्माद्वयवादेन च यथोपेक्षितस्तं मार्गमादायोभयोर्वैलक्षण्यप्रतिपादनाय क्रियते मया यत्नः । भाष्यभामत्यादिब्रहुषु ग्रन्थेषु सा प्रक्रिया प्रतिपादिता, पूर्वोत्तरपक्षश्चापि प्रदर्शितः । अत्र तु संक्षेपतरतदभिप्रायं मन्तव्यञ्च प्रदर्श्य, अरुचिदानं दत्त्वा सिद्धान्ते वैलक्षण्यमुद्घोष्यते ।

विज्ञानातिरिक्तं नास्ति किञ्चन, जाते च विज्ञाने सर्वे प्रीतिमन्तः प्रवृत्तिं कुर्वन्ति; किन्तु क्षणिकं तदिति ते मन्वते । क्षणिकविज्ञानवादे स्वीक्रियमाणे कस्य परस्मिन् काले पूर्वसंस्कारानुभवः स्यात् ? पूर्वसंस्कारानुभूतिं च विना कोऽपरज्ञानस्यानुभविता भवेदिति मनसिकृत्य निगद्यते—

संस्कारोऽपि स्थिरः कश्चिन्न त्वयाऽभ्युपगम्यते ।
क्षणिकस्य तु सामर्थ्यं कस्मात् कालान्तरस्मृतौ ॥

यद्प्यालयविज्ञानं तस्याप्यस्थिरता यदि ।
तदा प्राक्तन एवात्र दोषः प्रादुर्भविष्यति ॥
न हि तत्रापि संस्कारः सुस्थिरः कश्चनेष्यते ।
स्थिरत्वे क्षणिकं सर्वमित्यभ्युपगमः कुतः ॥
अपि चालयविज्ञाने प्रमाणं नास्ति किञ्चन ।
विज्ञानं हि निराकारं न किञ्चिदुपलभ्यते ॥
तस्माद् विषयसंवित्तिः स्यात् सुषुप्तिदशास्वपि ।
अन्यथा त्वन्मतेऽन्यस्य विज्ञानस्य न सम्भवः ॥ इति ।

यदि ब्रूयात्—आत्मनः ( विज्ञानस्य ) क्षणिकत्वेऽपि संस्कारात् स्मृतिर्भविष्यति, तदपि न सेत्स्यति। इत्यत आह—संस्कारोऽपि स्थिरः कश्चिन्नास्तीति। यद्युच्येत–मा नाम संस्कारः स्थिरो भवतु; किन्तु आलयविज्ञानमेव स्मर्तृ भविष्यति— "यद्प्यालयविज्ञानम्" इति। तदपि न। विज्ञानं हि निराकारं सद् नहि किञ्चिदुपलम्भकं भविष्यति। आलयविज्ञानं नाम अहमिति विज्ञानमुच्यते, सुषुप्तौ तु निराकारैव काचिद्विज्ञानसन्ततिरुदेतीति सौगतमतम्। तस्माद् विषयसंवित्तिः स्यात्। तथा सति सिद्धान्तहानिः।

विज्ञानस्याऽऽत्मत्वे तस्य निराकारत्वासम्भवात् सुषुप्तावपि विषयानुभवप्रसङ्गः। सुषुप्तौ विज्ञानाभावाभ्युपगमे च तदुत्तरमपि विज्ञानानुत्पत्तिप्रसङ्गः, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानं प्रति हेतुत्वाभ्युपगमात्।

अस्य दोषस्य परिहारस्तदैव स्यात्, यदाऽऽत्मनो विज्ञानस्य विज्ञानसंस्कारोपेतस्य जीवस्यानादित्वं सिद्धं भवेत्। तदैवेष्टसाधनताज्ञाने रागः, प्रतिकूले द्वेषः, जातमात्रस्य स्तन्यपानादौ प्रवृत्तिश्च साधीयसी स्यात्—एतत्सर्वं श्रुतिसिद्धेऽनादिमायाजीवस्वरूपे प्रतिपादिते सति समुत्पद्येत, नान्यथा। जीवेश्वरयोरैक्यं वस्तुत उपाधिकृतो भेदः सार्वत्रिकोऽनुभूयते। स च वेदसिद्धः। मायाकार्यमिदं जगत्। यावज्ज्ञानं नोदेति तावत्कालं स्थितिः। जीवेश्वरयोर्भेदोऽपि तावत्पर्यन्तः। ज्ञानसूर्ये प्रकाशिते तमोरूपमज्ञानं सद्यो विलीयत एव। तदैव स्वस्वरूपेण चैतन्यमेकरूपतामापाद्य न भेदप्रतीतिभाक्। जीवस्वरूपं पृथक् प्रतिभाति, अतो भेदप्रतीतिः। मायाकार्यमिदम्। तत्त्वमस्यादिश्रुतिवचनैर्भ्रमनिषेधमुखेन- जीवेश्वरभेदप्रतिपादन-

प्रक्रियया नित्यशुद्धबुद्धमुक्तात्मरूपं परब्रह्मस्वरूपमनुभूय जगति वेदान्तोक्तरीत्या मिथ्यात्वं सिद्धवत्कृत्य ब्रह्माद्वयरूपं श्रुतिसिद्धमद्वैतज्ञानं सर्वसम्मतं सिद्धं भवति। तद्यथा—

ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद् विद्यादात्मनो मायां यथा भासो यथा तमः॥
यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकम्॥

"तत्त्वमसि", "सत्यं ज्ञानमनन्तं ब्रह्म", "अयमात्मा ब्रह्म", "प्रज्ञानं ब्रह्म", "अहं ब्रह्मास्मि" इत्यादिश्रुतिशतैर्भ्रमनिषेधेन ( भ्रमरूपमध्यासं विनाश्य ) जीवेश्वरयोरभेद एव प्रतिपादितो भवति। तथैव भगवानपि पुरञ्जनमभेदान्वयेनोपदिशति—

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि॥

उपदेशफलमनुभवश्च यथा—

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्॥

"अपाणिपादोऽहमचिन्त्यशक्तिः", "नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम्", "सत्यं ज्ञानमनन्तं यत् परब्रह्माहमेव तत्", "इत आत्मा ततश्चात्मा सर्वमात्ममयं जगत्" इत्यादिप्रमाणैर्वचनैश्च सर्ववेदान्तसिद्धमाचार्यप्रतिपादितमद्वैतमतं सिद्धम्।

अत्र 'ऋतेऽर्थम्'—अर्थं विना यन्मिथ्याभूतदेहादिकमात्मन्यधिष्ठाने प्रतीयेत, सदात्मरूपं न प्रतीयेत तदात्मनो मायां विद्यात्। तत्रार्थं विना प्रतीतौ दृष्टान्तो यथाऽऽभासः—आकाशे द्विचन्द्रादिः। सतोऽप्यप्रतीतौ दृष्टान्तस्तु यथा—तमो राहुः। च स ग्रहमण्डले विद्यमानोऽपि न दृश्यत इति तद्वत् स्वशिरश्छेदनादिकमपि द्रष्टव्यम्। इदं सर्वं मायाविजृम्भणम्।

व्यवहारदशायां सर्वं स्वीक्रियते। सुखदुःखादिकमप्यौपाधिकं कल्प्यते। वस्तुतः परमार्थदशायां न जीवस्य दुःखभाक्त्वम्, जीवेश्वरयोरैक्यमेवेत्यभेदप्रतिपादकश्रुतिवाक्यानां हृदयं यत्र तत्र विवेचितमस्ति। प्रकरणमिदं बहुषु ग्रन्थेषु। अतस्तस्मिन् जिज्ञासा चेत् सुधीभिस्तत्रैवावलोकनीयम्।

उभयोर्वैलक्षण्यं त्विदं प्रतिभाति यद् योगाचारास्त्वर्थशून्यं विज्ञानमेव परमार्थः, बाह्यपदार्थास्तु स्वप्नादिवदसन्त एवेति। तदपि क्षणिकं सर्वमिति तन्मतम्।

अद्वैताभिमतश्च मोक्षः—ज्ञातत्वोपलक्षितो निरतिशयसच्चिदानन्दात्मक एव। निरुपप्लुतविज्ञानसन्ततिरूपमेव निर्वाणमिति विज्ञानवादिनः। श्लोकवार्त्तिकवचनमपि प्रमाणम्—

तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः॥

मोक्षश्च तदभिमतो यथा—विचित्रवासनावशेन विचित्रनीलपीतादिरूपेण प्रवहतो ज्ञानसन्तानस्य निःशेषवासनोच्छेदान्नीलपीतादिवैचित्र्यं हित्वा केवलं संविन्मात्रेणावस्थानमिति विज्ञानवादिनो बौद्धा मन्वत इति शास्त्रदीपिकावचनमपि प्रमाणम्।

"निःशेषानर्थोपबृंहणपूर्वकं सत्यचिदानन्दात्मनाऽवस्थानम्" इत्यौपनिषदाः।

अत्र योगाचारास्तु साकाराणां ज्ञानानां स्वयं वासनावशाद् वैचित्र्यं स्वीकुर्वन्ति। अद्वैतिनो मृद्घटादीनां हेतुहेतुमद्भावमभ्युपगच्छन्ति।

योगाचारास्तु ज्ञानस्यैवार्थगतव्यवहारयोग्यताया अपि सम्पादकत्वमिति सर्वसामयिकसम्मतम्। अन्यथा स्वपरवेद्ययोरनतिशयताप्रसक्तिः। निराकारस्य ज्ञानस्य प्रकाशत्वानुपपत्त्या साकारस्यैव तस्य भ्रमकृतो बहिर्वदवभासोऽभ्युपेतव्यः।

किञ्चार्थस्य ज्ञानवैलक्षण्यजननद्वारैव व्यवहारहेतुत्वमभ्युपेतव्यम्। तच्च ज्ञानस्यानादिवासनावशात् स्वतः सिद्धम्। ततोऽपार्थैवार्थकल्पनेति बाह्यार्थास्तित्वं निराकुर्वन्ति।

वेदान्ताद्वयवादस्तु—चिदात्मकं ब्रह्म स्वतः समुत्खातसकलप्रपञ्चसंसर्गमप्यनिर्वाच्यमायानिर्मितप्रपञ्चेन मिथ्यातादात्म्यवशात्तथैव भाति, न स्वतः साकारम्। अर्थश्च प्रमाणेन प्रमितो भवति, न तु प्रमाणस्वरूपमिति।

अतोऽनया रीत्या जीवेश्वरभेदप्रतिपादिकाः श्रुतयो व्यावहारिकभेदभावमुररीकृत्य कार्यकाले उपासनाकाले च प्रतिपादयन्ति, कथयन्ति, सकलैश्चानुभूयन्त एव। परमार्थतस्तु पूर्वजन्मोत्कृष्टसंस्कारवशाद् जाते चाऽऽवरणभङ्गे ज्ञानकाले तयोरेवाभेदप्रतिपादिकाः सहस्रशः श्रुतयो वर्तन्ते। यत्र तत्र समन्वये, अधिकरणे, प्रकरणे चापरोक्षीक्रियन्ते ता इति जानन्त्येव विद्वांसः।

क्षणिकविज्ञाने—अनादिरविच्छिन्नप्रवाहाभेदवासनैव निमित्तम्। वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकार-रूपवत्तया तिमिराद्युपहताक्ष्णां दुष्टभेदज्ञानवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोप-पत्तेः पर्यनुयोगायोगाद् ज्ञानमुत्पद्यते। तद्यथा—

अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥ इति।

वासनावैचित्र्यमात्रादेव ज्ञानवैचित्र्योपपत्तिः, तस्माद् बुद्धिरेवानादिवासना-वशादनेकाकाराऽवभासत इति। ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेद-विगलितविविधविषयाकारोपप्लव( मिथ्याज्ञानम् )विशुद्धविज्ञानोदयो महोदयो नाम मोक्षः सिद्धो भवतीति तन्मतम्।

विज्ञानवादिनये—वासना नामैकसन्तानवर्तिनामालयविज्ञानानां तत्प्रवृत्ति-विज्ञानजननशक्तिः। तस्याश्च स्वकार्योत्पादं प्रत्याभिमुख्यं परिपाकः। तस्य च प्रत्ययः कारणं स्वसन्तानवर्तिपूर्वक्षणः कक्षीक्रियते, सन्तानान्तरनिबन्धनत्वानङ्गी-कारात्। ततश्च प्रवृत्तिविज्ञानजनकालयविज्ञानवर्तिवासनापरिपाकं प्रति सर्वेऽप्यालय-विज्ञानवर्तिनः क्षणाः समर्था एवेति। न चेदेकोऽपि न समर्थः स्यादालयविज्ञान-सन्तानवर्तित्वाविशेषात्। सर्वे समर्था इति पक्षे कालक्षेपानुपपत्तिः। तदुक्तम्—

तत्स्यादालयविज्ञानं यद् भवेदहमास्पदम्।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥

इत्यस्मिन् मते वासनापरिपाकस्य वासनासन्तानगततत्पूर्वक्षणिकवासनैव कारणमास्थेयम्। तस्याश्च पूर्वक्षणिकवासनायाः स्वोत्तरक्षणिकवासनापरिपाककारणत्वे तस्या इवान्यासां सर्वासामप्यालयविज्ञानसन्ताननिष्ठत्वस्य तुल्यतया सर्वासामेव वासनानां स्वस्वोत्तरक्षणिकवासनापरिपाककारणत्वं दुर्वारमिति प्रवृत्तिविज्ञानसर्वदो-त्पत्तिप्रसङ्ग इति दिक्।

अपरतत्त्वप्रतिपादनपरायाः सिद्धान्तप्रक्रियाया विद्यमानत्वेऽपि विस्तरभयाद् नेह तन्यते। न च विदुषां कृते प्रयोजनमपि प्रेक्षामहे।

वेदान्ताद्वयवादिनस्तु—अहंपदाधिगम्यादन्यदात्मतत्त्वं नास्तीति न वक्तव्यम्, निरस्तसमस्तोपाधिकस्यात्मतत्त्वस्य श्रुत्यादिषु प्रसिद्धत्वात्, अहमादिसकलधर्माणा-

मौपाधिकत्वात्, तथा च निरुपाधिकं 'सदेव' इत्यादिश्रुतिसिद्धं यद्ब्रह्मशब्दवाच्यमात्मतत्त्वं तन्निश्चयार्थं ब्रह्मविचार आवश्यकः।

'सदेव' इत्यादिसहस्राणां श्रुतिवचनानां गौणार्थकत्वं स्वीकृत्य जीवात्मप्रशंसापरत्वेन कथञ्चिद् योजनं तु न न्याय्यमिति। तदेवोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गत्वेन तत्त्वं प्रतिपादयत उपचरितार्थत्वानुपपत्तेः। तथाहि—"सदेव सौम्येदम्" इत्यारभ्य "एतदात्म्यमिदं सर्वम्" इत्युपसंहारः। तथा च "तं त्वौपनिषदं पुरुषं पृच्छामि", "येनाश्रुतं श्रुतं भवति" इत्येकविज्ञानेन सर्वविज्ञानं फलम्। सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः। मृदादिदृष्टान्ता उपपत्तयः। तस्मादेतैर्लिङ्गैर्वेदान्तानां नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मपरत्वं निश्चेतव्यम्। तदित्थमौपनिषदस्याऽऽत्मतत्त्वस्याहमनुभवेऽनवभासमानत्वात् तस्यानुभवस्याध्यस्तात्मविषयत्वं सिद्धम्। तदेवं बृहदारण्यके, तैत्तिरीयके, मुण्डके, वेदान्तसारादौ च लिङ्गषट्कं छान्दोग्यवत् स्पष्टं प्रदर्शितं वर्तते। तत एव सुधीभिर्द्रष्टव्यम्।

न च विज्ञानात्मभाषिणां मते नैष दोषः समायाति, विशुद्धसावयवत्वादिति गणनीयम्; यः सुषुप्तः सोऽहं जागर्मीति स्थिरगोचरस्याहमुल्लेखस्य क्षणभङ्गिविज्ञानगोचरत्वेऽतस्मिंस्तद्बुद्धिरूपमिथ्याध्यासस्य तदवस्थानात्। तदनेन कृशोऽहम्, कृष्णोऽहम् इत्यादीनां प्रत्याख्यानानां बुद्ध्या सरूपताख्यानेनैवोपचारिकत्वं प्रत्याख्यातम्। तद्व्यापकभेदभानासम्भवस्य प्रागेव प्रपञ्चितत्वात्।

विज्ञानवादिनो हि—विज्ञानव्यतिरिक्तं नान्यत् किञ्चन तत्त्वं मन्यन्ते। बुद्धिरेव ग्राह्यग्राहकाकारा स्वसदृशाकारान् बाह्यान् घटादीन् स्वापेक्षया भिन्नान् कल्पयति। तदुक्तम्—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिर्भेदवानिव लक्ष्यते॥

तथा च स्थूलाद्यहंप्रत्यय औपचारिकः। तत्र भेदभानस्यावश्यकत्वस्योपपादितत्वात्, तस्य चात्राऽसम्भवात्, वास्तविकस्य विज्ञानातिरिक्तपदार्थस्य विज्ञानवादिभिरनङ्गीकाराद् नास्य मतस्य सर्वोपादेयतेति दिक्।

अद्वैतमते तु—सर्वश्रुतिस्मृतिसिद्धं सगुणनिर्गुणस्वरूपात्मकं मायाकल्पितमौपाधिकं भेदमङ्गीकृत्यापि सर्वथा निरस्तभेदकुहकम् अखण्डब्रह्मानन्दात्मकमात्मस्वरूपं प्रतिपादितं भवति। तद्यथा —

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः ॥

इति चित्सुखीवचनेनापि सिद्धमखण्डार्थत्वमनिर्वचनीयत्वरूपम् । अतः परं किमधिकेनेति विस्तरभयाद् विरम्यते ।

उभयोर्निष्कर्षस्त्वयमेव—एकत्र तु प्रबलैः प्रमाणयुक्त्यनुभवैः साधितेऽपि क्षणिकविज्ञानवादिना स्वमते स्थिरताभावे न तस्य कार्यकारणता सिद्धा भवति । यथा यथा तस्य कारणता प्रतिपाद्यते, तथा तथा सिकताकूपवद् विशीर्यत एव । अत्र मते कथं कार्यकारणभावः स्थिरो भवेत् ?

अपरज्ञानकाले पूर्वज्ञानस्याऽनुभविता नास्ति । सर्वथाऽयं नियमः- व्यवसायज्ञानाधीनमनुव्यवसायज्ञानं भवति । द्वितीयज्ञानकाले पूर्वक्षणवर्तिज्ञानस्योपस्थितेरभावात् 'घटज्ञानवानहम्' इत्याकारिका प्रतीतिः कथं कार्यसाधिका स्यात् ? अतः कार्यकारणभावाऽनुपपत्तिरूप एको दोषः ।

अपरश्च—"यः कर्ता स एव भोक्ता" इत्याकारिका व्यवस्थाऽपि विज्ञानवादिमते नोत्पद्यते । क्षणभेदाद् यो भोक्ता तस्य तुष्टेरभावः; तुष्टिस्तु भवत्येव । ज्ञानसंस्कारप्रवाहस्वीकारे च नियमबाधेऽनवस्थादोषापातः । अत आपातरमणीयेऽपि विज्ञानवादे योगाचारोक्तक्षणिकविज्ञानरूपे सिद्धान्ते न कापि व्यवस्था सिद्धा भवतीत्यस्वारस्यं व्यक्तीकृत्य वेदान्तमते मिथ्याभूतेऽपि जगति यावत्कालं ज्ञानेनावरणभङ्गो न भवति तावत् कालं सर्वं दृश्यमानं जगत् कार्यरूपेण स्थितं सदिव प्रतिभाति । मायोपाधिकमिदं मायाकार्यम् । वस्तुतोऽभिन्ननिमित्तोपादानकारणं सदधिष्ठानचैतन्यरूपं ब्रह्मैवास्य जगतः कारणम् । इत्थं समेऽपि वेदानुयायिनो व्यवहारं कुर्वन्तो दृश्यन्ते । तत्र पूर्वजन्मसंस्कारवशात्, गुरुकृपाबलात्, ईशानुग्रहाद्वा कदाचित् समुत्पन्नविवेकवैराग्यादिसाधनसम्पन्नो मुमुक्षुरज्ञानावरणभङ्गे जाते स्वयमेव सच्चिदानन्दरूपात्मके ब्रह्मणि तद्रूपतां सम्प्राप्य नामरूपे विधूय मोक्षपदवीभाग् भवतीति सर्वश्रुतिस्मृतिसिद्धमिदं वेदान्ताद्वैतमतम् । नात्र कश्चन विवाद इति सर्वसिद्धान्तसम्मतमिति शम् ॥



# विज्ञानाद्वयवादब्रह्माद्वयवादयोर्वैलक्षण्यम्

श्रीमुरलीधरपाण्डेयः, व्याकरणवेदान्तसाहित्याचार्यः, एम० ए०
वा० सं० वि० वाराणसी

अद्वयवादस्य बहवो भेदा उपलभ्यन्ते—ब्रह्माद्वयवादः, शून्याद्वयवादः, विज्ञानाद्वयवादः, शिवाद्वयवादः, शब्दाद्वयवादः, शुद्धाद्वयवादप्रभृतयः। समेष्वद्वयवादेषु किञ्चिदधिकमल्पं वा वैलक्षण्यं प्राप्यत एव। तत्र विज्ञानाद्वयब्रह्माद्वयवादयोर्वैलक्षण्यमालोच्यते।

## विज्ञानाद्वयवादः

विज्ञानाद्वयवादे विज्ञानमेव सत्, तच्च क्षणिकम्, यत् सत् तत् क्षणिकमिति व्याप्तेः। क्षणिकत्वेऽप्यद्वयत्वं तु समानकालिकसजातीयानेकविज्ञानसत्त्वाभिप्रायेणाभ्युपगम्यते। आलयविज्ञानानि प्रवृत्तिविज्ञानानानि च परस्परं भिन्नानि, किन्तु मूलविज्ञानं त्वेकमेव। अत एव समाधिदशायां ग्राह्यग्राहकाकारद्वयशून्यत्वेनाद्वयत्वमुक्तम्—

द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तमम्।
निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः॥

(महायानसूत्रालङ्कारे २८)

इदं च विश्वं विज्ञानस्यैव परिणामरूपम्। यथोक्तं त्रिंशिकायाम्—

विज्ञानपरिणामोऽयं विकल्पो यद् विकल्प्यते।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम्॥
सर्वबीजं हि विज्ञानं परिणामस्तथा तथा।
यात्यन्योन्यवशाद् येन विकल्पः स स जायते॥

(त्रिंशिका १७–१८)

स च परिणामः साङ्ख्यानामिव न सान्वयः, किन्तु निरन्वयः। यथा धर्मकीर्तिराह—

संसृज्यन्ते न विद्यन्ते स्वतोऽर्थाः पारमार्थिकाः।
रूपमेकमनेकं च तेषु बुद्धेरुपप्लवः॥

(प्र० वा० १–८)

विज्ञानपरिणामभूतः प्रपञ्चः क्षणिकत्वेन मायोपम उच्यते। यथा—

मायोपमान् पश्यति सर्वधातून् मायोपमान् वीक्ष्य स सर्वधर्मान्।

(महायानसूत्रालङ्कारे)

एतत्परिणामलक्षणं च तात्त्विकोऽन्यथाभावो न, अपि तु चन्द्रकीर्तिशब्देषु "कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः"। एवं च सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद् वस्तुतो न विद्यते। विज्ञानं पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्। प्रतीत्यसमुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितम्।

तथा च विज्ञानाद्वयवादेऽपरप्रत्ययस्य[1] शान्तस्य अप्रपञ्चितस्य निर्विकल्पस्य अनानार्थस्य परमार्थसत्यस्य विज्ञानस्य घटपटादिरूपः परिणामः सांवृतिक उच्यते; अर्थादविद्याकल्पितोऽज्ञानकल्पितो वा। संवृत्तिश्चाज्ञानमेव, यथाह चन्द्रकीर्तिः— "समन्ताद् वरणं संवृतिः। अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वावच्छादनात् संवृतिरित्युच्यते"। एतच्च लङ्कावतारसूत्रेऽपि स्पष्टितम्—"नित्यशब्दः पुनर्भगवन् काभिहितः? भगवानाह—भ्रान्तौ महामते, कथं पुनर्महामते भावाभावविवर्जिता भ्रान्तिः? एतस्मात् कारणात् शाश्वता भ्रान्तिः।"

अस्मिन्नये ग्राह्यग्राहकाकारपरिणामनिवृत्तिरेव निर्वाणपदेनाभिधीयते। यथा मैत्रेयनाथेन मध्यान्तविभागे व्याख्यातम्—"सर्वे विकल्पा निर्वान्ति" इति। अनेन निर्विकल्पकानुभव एव निर्वाणपदार्थः।

विज्ञानविश्वयोः सत्त्वासत्त्वनिर्वाहाय सत्तात्रयमङ्गीक्रियते—(१) परिकल्पिता, (२) परतन्त्रा, (३) परिनिष्पन्ना च। यद् यथाख्याति तत् परिकल्पितम्। प्रत्ययाधीनवृत्ति नैमित्तिकस्वभावं वा परतन्त्रम् (उभयोर्विशेषवैलक्षण्यमत्र नोपलभ्यते)। विकल्पद्वयनिर्मुक्तं सम्यग् ज्ञानमेव परिनिष्पन्नम्।

ब्रह्माद्वयवादः

ब्रह्माद्वयवादे सच्चिदानन्दरूपं ब्रह्मैव परमार्थतत्त्वम्। दृश्यमानं चैतत्सर्वं जगदादि आविद्यकं ब्रह्मण्येव तादात्म्येनाध्यस्तं ब्रह्मणो विवर्तरूपमेव। अविद्या च

---

१. अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत् तत्त्वस्य लक्षणम्॥

(मध्यमकवृत्तिः, प्रक० २४)

ब्रह्मणः शक्तिर्मायाप्रकृत्यादिशब्दव्यपदेश्या भावाभावविलक्षणा तत्त्वातत्त्वाभ्यां ब्रह्मणो भिन्नत्वाभिन्नत्वाभ्यामनिर्वचनीया त्रिगुणात्मिका जगन्मूलभूता। साऽपि विशुद्धसत्त्वप्रधानतया माया, मलिनसत्त्वप्रधानतया चाविद्येत्युच्यते। यथाह—पञ्चदश्याम्—

"सत्त्वशुद्ध्यविशुद्धाभ्यां मायाऽविद्येति ते मते।"

अयमेव मायाविद्याभेदो जीवेश्वरयोर्भेदं जनयति। एकमेव चैतन्यं ब्रह्म मायोपाधिना ईश्वरः, अविद्योपाधिना च जीव इत्युच्यते। अनयैव चाविद्यया अजायमानोऽपि जीवो बहुधा जायते। यथोक्तं गौडपादाचार्यैः—

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।
अजायमानो बहुधा मायया जायते तु सः॥

(माण्डूक्यकारिका, अ० २४)

अस्मिन्नये दृश्यमानमिदमखिलं ब्रह्मणो विवर्तरूपम्, न तु परिणामरूपम्। विवर्तश्चातात्त्विकोऽन्यथाभावः, यथोक्तं वेदान्तसारे—"अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः।" अर्थात् तात्त्विके ब्रह्मणि अतात्त्विकस्य जगतो भानम्। इदं च भानं गन्धर्वनगरादिभिर्मिथ्याभूतैरुपमीयते। यथा योगवासिष्ठे—

गन्धर्वनगराकारमपि स्वप्ननरोपमम्।

(यो० वा०, नि० पू० २२।५२)

इदं च तत्त्वमधिकस्पष्टतया श्रीमद्भागवते नारायणोक्त्या वर्णितम्—

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
यच्चाहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद् विद्यादात्मनो मायां यथा भासो यथा तमः॥

(श्रीमद्भागवते, २।१०।३२–३३)

अर्थात् सृष्टेः प्राग् ब्रह्मैवासीत्। स्थूलं सूक्ष्मं च तयोः कारणमपि नासीत्। सृष्टेरनन्तरमपि ब्रह्मैवासीत्। यदेतज्जगत् तदपि ब्रह्मैव, प्रलये योऽवशिष्येत सोऽपि ब्रह्मैव। द्वितीयस्मिन् श्लोके चाद्वैते द्वैतभानस्य प्रकारो निर्दिष्टः, यथा स्वप्नोऽसन्नपि

मनसा स्वस्मिन् प्रकाशते तथा मायया ब्रह्मणि दृश्यप्रपञ्चस्य भासः। इदमेवाग्रे पुनः स्पष्टीकृतम्—

नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं
मायागुणव्यतिकराद् यदुरुर्विभासि।

( श्रीमद्भागवते ३।९।१ )

अर्थाद् ब्रह्मणो भिन्नं किमपि तत्त्वं नास्ति; यत् किञ्चदपि दृश्यते तदसदस्ति। सतः प्रतीतिस्तु गुणव्यतिकरात्=मायाया गुणक्षोभाद् ब्रह्मसत्तयैव सदिवासत् प्रतिभासते। तत्रैवाग्रे उक्तम्—

'स्वप्नाभमस्तधीधिषणम्' इति।

( श्रीमद्भागवते १०।१४।२२ )

अस्मिन्नये "तत्त्वमसि", "सोऽहम्" इत्यादिवाक्योत्त्थात्मसाक्षात्कार एव मोक्षः।

अयं च ब्रह्माद्वयवादः श्रुतिभिस्त्रिधोपवर्ण्यते—

१—"एकमेवाद्वितीयम्" इति श्रुत्या स्वगतसजातीयविजातीयभेदप्रतिषेधमुखेन।

२—"ऐतदात्म्यमिदं सर्वम्", "यदयमात्मा", "ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चात्" इत्यादिश्रुतिभिः सार्वात्म्योपदेशमुखेन।

३—"नेह नानास्ति किञ्चन" इत्यादिश्रुत्या ब्रह्मणि प्रपञ्चप्रतिषेधमुखेन च।

एतदद्वयसिद्ध्यर्थं सत्ताद्वयं मन्यते—पारमार्थिकसत्ता व्यावहारिकसत्ता च। पारमार्थिकसत्ता ब्रह्मणो, व्यावहारिकसत्ता च सकलप्रपञ्चस्य। एतत्पुष्ट्यै च ब्रह्माद्वयवादे अध्यासवादः, बिम्बप्रतिबिम्बवादः, विवर्तवादः, अभिन्ननिमित्तोपादानवादः, वैतथ्यवादः, अवच्छेदवाद इत्यादयो बहवो वादाः समर्थ्यन्ते।

## विज्ञानाद्वयवादे ब्रह्माद्वयवादे च मूलभूतं वैलक्षण्यम्

आपाततो विज्ञानाद्वयवादे ब्रह्माद्वयवादे च साम्यमिवाभाति। यतो हि मूलतो विज्ञानमेकं ब्रह्माप्येकम्, ब्रह्मणश्च स्वरूपं ज्ञानमेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः। यदपि ज्ञानगम्यं तत् सर्वं विज्ञानम्, ब्रह्मापि एवमेव। ऐतरेयोपनिषद्युक्तम्—

"सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्"

( ऐ० उ० ३–३ )

अनयोपनिषदा सर्वाधिष्ठातृ विज्ञानमेव समर्थ्यते, केवलं विज्ञानपदस्य स्थाने प्रज्ञानपदस्योपादानं कृतं वर्तते ।

उभयोर्मते एकस्यैव पारमार्थिकसत्ता प्रपञ्चस्य च व्यावहारिकसत्ता । उभयत्रैव निर्विकल्पकानुभव एव मोक्षः ।

एवं च साम्यमाभाति, किन्त्वन्तःप्रविश्यालोचनेन विज्ञानाद्वये ब्रह्माद्वये च बहु वैलक्षण्यमधिगम्यते । तथाहि—

१—विज्ञानाद्वये विज्ञानं क्षणिकम्, ब्रह्म च कूटस्थनित्यम् ।

२—प्रथमपक्षे विज्ञानं क्षणिकत्वेनानेकम् (अद्वयत्वं तु पूर्वमुपपादितम्), ब्रह्म त्वेकम् "एकमेवाद्वितीयम्" इति श्रुतेः ।

३—प्रथमपक्षे इदं जगद् विज्ञानस्य परिणामभूतं मन्यते, द्वितीयपक्षे विवर्तरूपम् ।

४—प्रथमपक्षे बाह्यार्थसत्ता न स्वीक्रियते, द्वितीयपक्षे वृत्तिहेतुतया बाह्यार्थस्यापि सत्ताङ्गीक्रियते ।

५—प्रथमपक्षे बाह्यार्थस्य विज्ञानपरिणामस्य क्षणिकत्वेन मायोपमत्वमुच्यते । यथा महायानसूत्रालङ्कारे—"मायोपमान् पश्यति सर्वधातून्" इति । द्वितीये मायामयत्वं निगद्यते । यथाश्रुतिः—"नामरूपाभ्यां व्याक्रियते" इति ।

६—उभयत्रापि स्वप्रकाशत्वम्, किन्तु प्रथमपक्षे एकस्मिन्नेव ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम् । द्वितीयपक्षे ब्रह्मणः परप्रकाश्याभावेन स्वस्य च प्रकाशरूपत्वेन स्वप्रकाशत्वम् ।

७—प्रथमपक्षे ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः, द्वितीयपक्षे मुक्तस्वभाव एवात्मा, केवलमविद्याजन्यस्य प्रपञ्चस्य निवृत्तिज्ञानमेव मोक्षः ।

८—प्रथमपक्षे प्रपञ्चस्य सांवृतिकं सत्त्वम्, द्वितीयपक्षे व्यावहारिकं प्रातिभासिकं च सत्त्वम् ।

९—प्रथमपक्षे विज्ञानस्य वासनासहकृतं जगत्स्रष्टृत्वम्, द्वितीयपक्षे मायाया अविद्यायाश्च सहकारेण जगत्कर्तृत्वम् ।

१०—प्रथमपक्षे भ्रान्तिरेवाविद्या ( यथोक्तं लङ्कावतारे, एतत्पूर्वमुपपादितम् ), द्वितीयपक्षे भ्रमाद् भिन्ना अनिर्वाच्या अनादिरविद्या।

११—प्रथमपक्षे विज्ञानस्यैवार्थाकारः परिणामः, द्वितीयपक्षे अन्तः-करणस्यार्थाकारो वृत्तिरूपः परिणामः।

१२—प्रथमपक्षे सत्तात्रयम्—परिकल्पिता, परतन्त्रा, परिनिष्पन्ना च; द्वितीय-पक्षे सत्ताद्वयम्—पारमार्थिकसत्ता व्यावहारिकसत्ता च। इत्थं च विज्ञानाद्वयवादे ब्रह्माद्वयवादे च बहु वैलक्षण्यमस्ति। वस्तुतो द्वयोराधारभूमिरेव भिन्नेति शम्।



# उद्घाटनभाषणम्

वाराणसेयसंस्कृतविश्वविद्यालये आश्विनकृष्णैकादश्यां भौमे २०२२ वै०*
वेदान्तगोष्ठ्याः शुभारम्भावसरे सं० वि० वि० उपकुलपतीनां
श्रीमत्सुरतिनारायणमणित्रिपाठिमहोदयानामुद्घाटनभाषणम्।

अस्माकं भारतस्य संस्कृतिः सर्वाभ्यः अन्य संस्कृतिभ्यः प्राचीनापि इदानीं यावदविच्छिन्नधारया प्रवहन्ती याद्यत्वेऽप्यवलोक्यते तत्र मुख्यं कारणमस्माकं प्राचीनानि भारतीयदर्शनान्येव। राष्ट्रोन्नतौ असाधारणमुपयोगित्वमावहतां त्याग-सहिष्णुता-दया-सत्य-धैर्यंत्येवमादीनाम् गुणानां समृद्धिस्तदैव सम्भवति यदा प्रत्येकं मानवस्य हृदि कर्त्तव्यपरायणतायाः सुदृढो भावः समुदियात्। कर्त्तव्यपरायणता एव धर्म इति स्फुटं वक्तुं शक्यम्।

इयं हि कर्त्तव्यपरायणता परलोके विश्वासस्य आत्मनो नित्यतायाश्च भाव-मवलम्ब्यैवावतिष्ठते। परलोके विश्वासः आत्मनो नित्यत्वञ्च भारतीयैरेव आस्तिकैः दर्शनैः महता समारोहेण परिपुष्येते। यावत्पर्यन्तं परलोके विश्वासमादधानानां मानवानां समाजे भूयस्त्वं न सम्भवति, तावत्पर्यन्तं राज्यव्यवस्थायाः सुचारुरूपेण सञ्चालनं दुष्करमेव भवति। यतो हि राजस्य सुचारुरूपेण सञ्चालनं नाम शिष्टपरि-पालनम्, दुष्टनिग्रहश्च; अनयोश्च यथावदनुष्ठानं न्यायान्यायविवेकायत्तम्, न्याया-न्यायविवेकश्च तावत्पर्यन्तं दुःशको यावत्पर्यन्तं समाजे आधिक्येन मानवानां मनो-वृत्तिः निरङ्कुशरूपेण अर्थभोगौ एवानुसरेत्। अतः अर्थभोगादिमुखमग्रेसरन्त्या मनोवृत्तेः अवरोधः नितरामपेक्षितः, स च परलोके विश्वासमुत्पाद्यैव कर्त्तुं शक्यत इति न तिरोहितं विपश्चिदग्रेसराणाम्।

इदानीमिदमत्यावश्यकं यदधिकाधिकसङ्ख्यया मानवेषु पूर्वोक्ता त्यागसहिष्णु-तादयो गुणाः सुप्रतिष्ठिताः स्युस्तदर्थञ्च भारतीयदर्शनशास्त्राणामध्ययनं, बोधः, तदनुसारमाचरणम्, प्रचारणञ्चात्यन्तमपेक्ष्यन्ते। दर्शनेषु वेदान्तदर्शनस्य सर्वोत्क-र्षेणावस्थितिः सर्वैः सम्मन्यते। शान्तेः सर्वतोभावेन वास्तविकः समुपासकः वेदान्त-शास्त्रज्ञ एव भवतुं शक्नोति। शान्तेश्च समुपासकेन अर्थात् सर्वतोभावेन शमसम्पन्नेनैव

* दि० २१।९।६५ ई०

जनेन राज्यस्य सुचारुरूपेण सञ्चालनं कर्त्तुं शक्यमिति अस्माकं भारतीयराजनीतिशास्त्राणां स्फुटः समुद्घोषः—"नृपतिपदाय शमाय च क्षमः" इति। शमसम्पन्नता च इन्द्रियजयायत्तेति निर्विवादम्, इन्द्रियजयश्च अध्यात्मप्रधानस्य भारतीयदर्शनशास्त्रस्य वेदान्तस्याध्ययनादिभिरेव सम्पादयितुं शक्यत इत्यत्र सन्देहलेशोऽपि नास्ति। इन्द्रियजयश्च राज्यप्रतिष्ठायै समाजे कियान् अपेक्ष्यत इति नीतिश्लोकेनानेन स्पष्टम्—

एकस्यापि न यः शक्तो मनसः सन्निबर्हणे।
महीं सागरपर्यन्तां कथं नु स विजेष्यति॥ इति

इदं विश्वजनीनं तथ्यं यत् शान्तेः स एव वास्तविकः समुपासको यः सत्यवसरे पराक्रममपि सर्वोत्कर्षेण विदध्यात्; अत एव तु भारविः स्फुटं वक्ति—

"शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः॥

अर्थात् शुचि वेदाद्यध्ययनं वपुः भूषयति तच्च वेदाद्यध्ययनमपि प्रशमेन (शान्त्या) अलङ्क्रियते, प्रशमस्य चालङ्करणं पराक्रम एव, पराक्रमश्चापि नयेन आपादितया सिद्ध्या शोभते। एतेनेदं पर्यवसितं भवति यद् यतः शान्तेः सौन्दर्यं पराक्रमायत्तमतः शान्तेः समुपासकेन तस्याः समुपासना पराक्रममात्मसात्कृत्यैव विधातुं शक्या, अन्यथा सा समुपासना कायरतायामेव पर्यवस्यति या न कस्यापीष्टा।

अतोऽहमाशासे यद् भवद्भिः आयोजितेयं वेदान्तविचारगोष्ठी न केवलं भारतेऽपि तु समस्तेऽपि विश्वे नूनमिदं प्रचारयिष्यति यत् सर्वेऽपि मानवाः विशेषतश्च भारतवासिनो वयं शान्तेः समुपासकाः सन्तोऽपि सम्प्राप्तेऽवसरे पराक्रममपि सर्वोत्कर्षेणावलम्ब्य निश्चप्रचं सिद्धिं प्राप्नुयाम, देशस्य अक्षुण्णां संस्कृतिं यथावत् प्रतिष्ठापर्यन्तो राष्ट्रस्य सर्वविधसमुन्नतौ सहयोगं च कुर्वन्तस्तिष्ठेमेति शम्।



# परिषदो विवरणम्

माननीयाः सभापतिमहोदयाः, श्रीमन्त उपकुलपतिमहाभागाः, आदरणीया विद्वद्वृन्दास्तथा बन्धवः ।

अद्य वयं देशस्यातिगम्भीरायां चिन्ताग्रस्तायामवस्थायां पतिताः सन्त इमां वेदान्तविचारगोष्ठीं सम्पादयितुं उपस्थिताः स्मः । नासीदस्या गोष्ठ्याः कर्तव्यतया यदा निर्धारणं कृतं तदा एतादृशी कल्पनापि, परं दैववशात् समुपस्थितेयं दुर्घटना । सज्जनाः ! इयं विचारगोष्ठी कर्तव्या इति भावना तावदधिकारिणां पुरतः समुत्पन्ना कस्मात् कारणाद् इति यदि वयमालोचयामस्तदा स्पष्टमिदं वक्तुं शक्यते यदस्माकं समाजे चारित्र्यं यद् मानवताया मूलभूतं इति वक्तुं शक्यते तस्य पाश्चात्यशिक्षादिप्रभाववशात् प्रतिदिनं अपकर्षः अनुभवपथं समागच्छमानः चिन्तां महतीं भविष्यत्काले समुत्पादयति । यतोहि—

इदं प्रकृत्या विषयैर्वशीकृतं परस्परस्त्रीधनलोलुपं जगत् ।
सनातने वर्त्मनि साधुसेविते प्रतीयते दण्डभयोपपीडितम् ॥

इति नीतिवचनानुसारेण यावत्पर्यन्तं प्रजासु दण्डभयं न जागृतं भवेत् तावत्पर्यन्तं समाजस्य सुस्थितिः चरित्रसम्पन्नता च न संम्भाव्यते अतः प्रजासु दण्डभयं कथं भवेदिति विचारः सर्वेषां मनसि समुपतिष्ठति । तत्र दण्डभयं द्विविधं भवति, परलोकदण्डभयमेकं अपरञ्च राजदण्डभयम्, तत्र राजदण्डभयं तदैव सम्पादयितुं शक्यं यदि राजकीयकार्यकारिणोऽधिकारिणः उत्कोचादिग्रहणं न कुर्युः, अन्यथा तु शिष्टपरिपालनं दुष्टनिग्रहश्चेति प्रधानभूतं राजकीयायाः सभायाः प्रयोजनं विलुप्तप्रायमेव भवति । एवं स्थिते उत्कोचग्रहणवृत्तेः विलोपः कथं सम्भाव्यते इति प्रश्ने विचार्यमाणे इदमेव वक्तव्यं भवति यद् राजकीयेषु अधिकारिषु प्रजासु च परलोकदण्डभयं यदि स्यात् तदैव तद् भवितुमर्हति नान्यथा । अतएवोक्तम्—

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ इति ।

परलोकविश्वासोत्पादने अस्माकं समेषामपिदर्शनानां महानुपयोगो वर्तते । यतो हि सर्वैरप्यास्तिकदर्शनैः परलोकस्यास्तित्वं सर्वथैव सप्रमाणमुपस्थाप्यते । अतः सर्वेषामपि भारतीयदर्शनानां प्रचारः सर्वथा वर्तमानकालेऽपेक्षितो वर्तते । इदमत्रावश्यं निवेदनीयमस्ति, प्रचारस्तावत् स्वयमाचरणं विना न सम्भवति । अत एव महाराष्ट्रभाषायां केनचिद् महात्मना कथितमिदमस्ति—

"जैसा बोले तैसा चाले त्याची वन्दावी पावले ।

अर्थात् यथा यो वक्ति तथा स्वयं तेनाचरणं यदि क्रियते तदैव तत् प्रचारक्षमं भवितुमर्हति, नान्यथा । तत्रापि दर्शनेषु प्रधानतमस्य वेदान्तदर्शनस्य प्रचारो

महते उपकाराय भविष्यति। इतिहासतोपि स्पष्टमेतज्ज्ञायते यत् श्रीरामदासस्वामि-श्रीतुलसीदासप्रभृतिभिः स्वीयग्रन्थेषु वेदान्तप्रतिपादनं कृत्वैव जनतायां जागृतिः समुत्पादिता। अतो वर्तमानसमयेऽपि वेदान्तविचारगोष्ठ्या आयोजनं सर्वथा उपयुक्ततममेव प्रतिभातं विचारकाणाम्।

सज्जनाः ? वयमिदानीं स्वातन्त्र्यमनुभवामः, तदिदमस्माकं स्वातन्त्र्यं संशयावस्थायां समापतितं वर्तते, पारतन्त्र्यभीतिरस्माकं पुरतः समुपस्थिता वर्तते। एतस्यामवस्थायां यदि सम्यग् विचारः क्रियते तदा पारतन्त्र्यस्य यत् कारणं शास्त्रेषु प्रतिपादितमस्ति तन्निराकरणं स्वातन्त्र्यायापेक्षितस्य उपायस्यानुष्ठानमेव वर्तमान-समये आपन्निराकरणोपाय इति स्पष्टमेव विदुषाम्। तत्र अज्ञस्तावद् विज्ञपराधीनो भवतीति सिद्धान्तः, अर्थात् पारतन्त्र्यस्य कारणं अज्ञतैव भवति। यो यस्मि-न्नंशेऽज्ञो भवति स तस्मिन्नंशे पराधीनो भवति। तदुक्तम् जाड्यामप्रतिपत्तिः स्यात् सर्वकार्येषु सर्वदा। अज्ञानं पारवश्यं च एतैर्जाड्यं विभावयेत्। अतः सिद्धमिदं परतन्त्रताया मूलकारणं जाड्यमेव भवति। ज्ञानं तावत् स्वतन्त्रतायां हेतुः। अतोऽ-स्मदीयवेदान्ते सर्वस्मात् प्रियम् अर्थादात्मरूपमेव ज्ञानमिति स्वीक्रियते तदेव च ज्ञानमानन्दरूपमिति अस्मदीयः सिद्धान्तः। एवं च अस्मदीयसमाजे ज्ञानसम्पा-दनमेव यदि आनन्दानुभवः सर्वेषां भविष्यति, तदैव अस्मदीयं राष्ट्रं सर्वथा स्वतन्त्रं भवितुमर्हति। तथा च सर्वराष्ट्रापेक्षया ज्ञाने अस्मदीयं राष्ट्रमुन्नतं भवत्विति भावं मनसि निधाय सर्वैरपि ज्ञानार्जने प्रयत्नः कर्तव्य इति अस्मदीयवेदान्तसिद्धान्तः महते उपकाराय भविष्यति।

दुर्दैवतः कलियुगप्रभावाद् ज्ञाने आनन्दानुभवमकुर्वाणाः सम्मोहे एव चानन्दानुभवात्मकेन मदेनाक्रान्ता जना विशेषतः समुपलक्ष्यन्ते। मदमानयो-स्तावत् सर्वथा परित्यागः समाजेऽपेक्षितः, तदुक्तं भारविणा—

"मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः॥
अपरागसमीरणेरितः क्रमशीर्णा कुलमूलसन्ततिः।
सुकरस्तावदसहिष्णुना रिपुरुन्मूलयितुं महानपि॥

तदेतेन विवेचनेन स्पष्टमिदं प्रतीयते यदस्मदीयवेदान्तस्य वर्तमानसमये स्वातन्त्र्यसंरक्षणे महानस्ति उपयोग इति। यद्यपि वर्तमाने युद्धसमये वेदान्त-विचारगोष्ठ्या आयोजनं सर्वथा अनौचित्यपूर्णमिति कैश्चिद् मित्रैरेवाहमुक्तः, तथाप्यत्र विषये किञ्चिन्निवेदनं नास्थाने स्यादिति मन्ये।

मान्याः ! इदानीमस्माकं नेतारः सर्वेपि इममेव सिद्धान्तमुपस्थापयन्ति प्रचार-यन्ति च यद् वयं सर्वेऽपि स्वीयस्वातन्त्र्यस्य संरक्षणाय सुखेन मरणं स्वीकर्तुं सन्नद्धाः स्मः, परं पारतन्त्र्यं स्वीकृत्य अस्माभिः कथमपि न जीवितुं शक्यमिति।

परमत्र विषये प्रश्न एकः समुपतिष्ठति यद् मरणं यद्यस्माभिः स्वीकरिष्यते तर्हि अस्मदीयः को लाभः ? तदपेक्षया इदानीं वैतसीं वृत्तिं स्वीकृत्य पारतन्त्र्यमनुभव-

न्तोऽपि वयमग्रे स्वीयां शक्तिं सम्पाद्य पुनः स्वातन्त्र्यं स्वायत्तीकरिष्याम इति। एतस्य प्रश्नस्योत्तरमस्मदीयवेदान्तग्रन्थात् सम्यगेव भवति। यतो हि "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः" इत्युक्तदिशा सर्वासामुपनिषदां सारभूतायां भगवद्गीतायां भगवता स्पष्टमुच्यते—"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्"। एवञ्च मरणे तावदत्रत्यसुखभोगापेक्षयाप्यधिकं सुखमस्माभिर्लप्स्यते इति हेतोर्मरणमेव यदि आपतेत् तर्हि तत् स्वीकर्तव्यम्, न पुनः पारतन्त्र्यमिति। अतो वर्तमानसमये वेदान्तविचारो भवद्भिर्यदि तथाकृतः प्रचारितश्च स्यात्, येन स्वकर्तव्यनिर्वहणे सर्वोऽपि भारतीयसमाजः सन्नद्धो भवेदिति कृत्वा सर्वथा वर्तमानसमये वेदान्तविचारगोष्ठी उपयुक्तैव। अपि च यदा कौरवपाण्डवयोर्युद्धमाभूत्, तदापि वेदान्तप्रधानभूताया भगवद्गीताया उपदेशो भगवता कृतः। अतो वर्तमानेऽपि युद्धसमये वेदान्तविचारस्तस्य प्रचारश्च सर्वथा जनतासु स्वकर्तव्यानुष्ठाने प्रेरणार्थं भविष्यतीति दृढं विश्वसिमि। अन्ते च इदमेव निवेदयामि यदस्माकं युद्धमिदं न्यायमूलकमत्रास्ति। न्यायश्च भगवत एव स्वरूपमस्ति। यद्यपि शत्रुसैन्यं संख्यया अस्मदधिकमस्ति तथापि पाण्डवानां सैन्यं स्वल्पमपि यथा कौरवाणां समूलविनाशाय क्षममभवत्, तद्वदेवास्मदीयोऽपि विजयः सुनिश्चित एव। अत एवोक्तम्—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो नित्यं ध्रुवा नीतिर्मतिर्मम॥

इयं परिषद् दिनत्रयं कर्तव्यतया निर्धारिता यस्यां प्रायः पञ्चविंशतिसंख्याकानां निबन्धानां वाचनम्, तत्रत्यविषयेषु च विदुषां विचारविनिमयः कर्तव्यत्वेन निर्धारितो वर्तते। अस्यां देशान्तरात् समागत्य ये विद्वांसः सर्वथा सहयोगमकुर्वन् तेभ्यो यैः स्वकीया निबन्धाः प्रेषितास्तेभ्यश्चाधमर्णतां निवेदयन् विरमामि।

इयं परिषद् २१-९-६५ दिनाङ्कतः समारभ्य दिनत्रयं यावत् सम्पन्ना। तस्याञ्च

श्रीरघुनाथशर्ममहोदयाः, वा० सं० वि० विद्यालये भू० पू० वेदान्तविभागाध्यक्षाः।
,, टी० आर् रामचन्द्रदीक्षितमहोदयाः का. हि. वि., सं. म. भू. पू. अध्यक्षाः।
,, वे० सु० रामचन्द्रशास्त्रिमहोदयाः, का. हि. वि. वि., सं. म. वि. अध्यक्षाः अध्यक्षपदमलङ्कुर्वन।

तत्र निम्नलिखितेषु विषयेषु निबन्धाः समालोचिताः—

१—अद्वैतसिद्धान्ता राष्ट्रोन्नतौ प्रतिबन्धका उपयोगिनो वा।
२—मायास्वरूपविमर्शपूर्वकमध्यासविषये दर्शनान्तरैस्तुलनात्मकं विवेचनम्।
३—श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च।
४—विज्ञानाद्वयवादब्रह्माद्वयवादयोर्वैलक्षण्यम्।

अन्तिमे च दिने धन्यवादप्रदानानन्तरं विचारगोष्ठी समाप्तिमगादिति।

परिषन्मन्त्री



## सम्पादकीयम्

### वेदान्ताङ्कविषये किञ्चित्

सारस्वत्याः सुषमाया एकविंशतितमवर्षस्येमौ तृतीयचतुर्थाङ्कौ साम्प्रतं वेदान्ताङ्कत्वेनोपस्थाप्येते विदुषां पुरतः। व्यतीतस्य १९६६ वर्षीयस्य सितम्बरमासस्य २, १, २२, २३ दिनत्रयं यावद् वाराणसेयसंस्कृतविश्वविद्यालये एका वेदान्तगोष्ठी समायोजिता। तत्र सम्पन्नस्य समस्तस्य कार्यविधेर्विवरणं तस्या गोष्ठ्या मन्त्रिमहोदयैः संकलितमत्र द्रष्टव्यं प्रेक्षावद्भिः। समागतेषु निबन्धेषु प्रायः सर्वं एव निबन्धा अत्र प्रकाश्यमलभन्त। ते च चतुर्षु विषयेषु विभक्ता दरीदृश्यन्ते तदित्थम्—(१) वेदान्तसिद्धान्ता लौकिकोन्नतौ राष्ट्रोन्नतौ वा साधकाः सन्ति न वा, (२) मायाया अध्यासस्य वा किं स्वरूपम्, (३) श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च, (४) विज्ञानाद्वयवादब्रह्माद्वयवादयोर्वैलक्षण्यं च। विलक्षण एको निबन्धश्च वेदान्तोपदेशविधेर्वैज्ञानिकत्वप्रतिपादनपरः।

उपनिषदः, ब्रह्मसूत्राणि भगवद्गीता चेति प्रस्थानत्रयी, भागवतस्यापि तत्र परिगणने तु प्रस्थानचतुष्टयीयं जीवातुभूता वेदान्तदर्शनस्येति जानन्ति विद्वांसः। एतेषामेव मूलभूतानां ग्रन्थानां भाष्यवार्त्तिकव्याख्यानोपव्याख्यानमुखेन नानाविधानि वेदान्तदर्शनानि विततानीति नात्र विसंवादः कस्यचिदपि। पाश्चात्यदर्शनानां विचारशेषो यत्र जायते ततः प्रवर्तते भारतीयदर्शनानां साम्प्रतं विचारारम्भ इति प्रवादममुं सत्यापयन्ति याथातथ्येन वेदान्तदर्शनानीत्यत्र मन्ये न कस्यापि विप्रतिपत्तिः समुत्पद्येत।

तदिदं वेदान्तदर्शनमवलम्ब्य प्रवादोऽयं प्रवर्तते यदिदं दर्शनमधीतिनं लौकिकात् पथः प्रच्यावयति, संन्यासमार्गे च प्रवर्तयतीति। ततो न कोऽपि लौकिक उपयोगोऽस्य दर्शनस्येति रूढधियः केचन मन्यन्ते। आक्षेपस्यास्य परिजिहीर्षयैवात्र प्रथमेन निबन्धेन वेदान्तोपदेशविधेर्वैज्ञानिकत्वं संसाधितम्। ततः परं चतुर्भिर्निबन्धैर्वेदान्तसिद्धान्तानां लौकिकोन्नतिसाधकत्वं

विशेषतो राष्ट्रोन्नतिसाधकत्वं च सविस्तारं सप्रमाणयुक्तिकं प्रत्यपादि। विद्वद्भिर्निबन्धकारैश्च वेदान्त-सिद्धान्त-लौकिकोन्नति-राष्ट्रोन्नतिशब्दानां प्रतिपाद्या अर्थाश्चापि व्याख्याताः। तत्र प्रथमे निबन्धे कठ-मुण्डकाद्युपनिषदां ब्रह्मसूत्राणां भगवद्गीतायाश्च वाक्यान्याश्रित्य तेषां लौकिकोन्नति-साधकत्वं सुष्ठु समसाधि। द्वितीये निबन्धे वेदान्तानां राष्ट्रोन्नतिसाधकत्वे कौटिलीयार्थशास्त्रमन्ये च नीतिग्रन्थाः समवलम्बिताः। यतो हि राष्ट्रसमुन्नतये इन्द्रियजयादिकं नितान्तमपेक्षितम्। एतच्च वेदान्ताध्ययनेनैव संपाद्येतेति। तृतीये निबन्धे विकारहेतुषु सत्स्वपि निर्विकारतासंस्थापने द्वैतमिथ्यात्वस्योपयोगमुखेन ऐक्यभावनापादनमुखेन च वेदान्तानां राष्ट्रोन्नतिसाधकत्वं प्रतिपादितम्। चतुर्थे च मानवेषु परस्परं सद्भाववृद्धिर्ब्रह्मविद्याभ्यासायत्तेति सद्भावाः सविस्तरं प्रत्यपाद्यन्त, किं फलेयं ब्रह्मविद्येति च प्रतिपाद्य तस्या राष्ट्रोन्नतावुपयोगित्वं संसाधितम्।

द्वितीये विभागे सन्ति पञ्च निबन्धाः। तत्र प्रथमेन निबन्धेन मायायाः स्वरूपावबोधन-मुखेन तस्य भेदोपभेदान् प्रतिपाद्य प्रतिस्वरूपं तत्तद्वादिप्रतिपादितं विविच्य अध्यासनिरा-करणोपायानामुपयोगो दर्शितः। द्वितीये चैतन्येऽध्यस्तत्वमन्तरा न विषयाणां प्रकाश इति प्रतिज्ञाय; विज्ञानवादिमतेन विदेशीयदर्शने, प्रत्यभिज्ञादर्शने, सांख्यमते, बाह्यसद्वादिबौद्धमते, न्यायमते चाध्यासस्य किं स्वरूपमिति निरूप्य; मायायाः स्वरूपपरिचयः सम्प्रदायश्च प्रदर्शितः। तृतीये शाङ्करवेदान्ते शुद्धाद्वैतवेदान्ते च मायायाः किं स्वरूपमिति प्रतिपाद्याध्यासस्वरूपं नाना-वादिभिरङ्गीकृतं समालोचितम्। चतुर्थे माया, अविद्या, अज्ञानम्, अजा, तपः, शक्तिः, प्रधानम्, अव्यक्तम्, प्रकृतिरिति चानर्थान्तरमिति विविच्याध्यासस्य भेदोपभेदा व्याख्याताः। एवमेव पञ्चमे निबन्धे विशेषतः पुराणप्रतिपादितं मायायाः स्वरूपमुपवर्णितम्, मायाविलसितस्य भ्रान्तिरूपाज्ञानात्मकस्याध्यासस्य च हेयत्वं प्रत्यपादि।

तृतीयेविभागे निबन्धचतुष्टयेन स्वया स्वया विशिष्टया प्रतिपादनपद्धत्या श्रवणमनन-निदिध्यासनानां स्वरूपमुपवर्णितं तेषामुपयोगश्च प्रदर्शितः।

अन्तिमे विभागे सन्ति त्रयो निबन्धाः। तत्र प्रथमे निबन्धे किं नाम विज्ञानम्? कोऽयं विज्ञानाद्वयवादः? इतिप्रश्नाविमौ समाधाय योगाचाराभिमतो विज्ञानवादः, वेदान्तसिद्धो विज्ञाना-द्वयवादो ब्रह्माद्वयवादश्च व्याख्यातः। द्वितीये निबन्धे योगाचाराभिमतमात्मख्यातिरूपं विज्ञान-

क्षणिकवादं तत्प्रतिपादितदृशा पूर्वपक्षीकृत्य भाष्यभामत्यादिसाधितो ब्रह्माद्वयवादः सिद्धान्तीकृतः। तृतीये च निबन्धेऽद्वयवादस्य समुपलभ्यमानान् ब्रह्माद्वयवाद-शून्याद्वयवाद-विज्ञानाद्वयवाद-शिवाद्वयवाद-शब्दाद्वयवाद-शुद्धाद्वयवादप्रभृतीन् भेदान् बहूनुट्टङ्क्य विज्ञानाद्वयब्रह्माद्वयवादयोः स्वरूपनिदर्शनमुखेन तयोः द्वादशविधं वैलक्षण्यं परिगणितम्।



रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ४. प्रकाशक का नाम | श्री बलदेव उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ५. सम्पादक का नाम | श्री बलदेव उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |

मैं श्री बलदेव उपाध्याय घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है ।

श्री बलदेव उपाध्याय
हस्ताक्षर

## प्रकाश्यमाना ग्रन्थाः

| | | |
|---|---|---|
| १. | भक्तिरत्नावली | स्वामिविष्णुपुरीविरचिता, अनुवादकः-श्रीकृष्णमणित्रिपाठी । |
| २. | हयत ( अरत्नीयज्यौतिषम् ) | श्रीविभूतिभूषणभट्टाचार्यसम्पादितम् |
| ३. | बृहत्संहिता | ( ज्यौतिषम् ) श्रीवराहमिहिरविरचिता, भट्टोत्पलविवृतिसहिता । |
| ४. | विसुद्धिमग्गो | ( पालिः ) बुद्धघोषाचार्यविरचितः, महाटीका-सहितः, श्रीरेवतधम्मसम्पादितः । |
| ५. | लघुकाशिका ( व्याकरणम् ) | श्रीसुदर्शनाचार्यविरचिता । |
| ६. | तन्त्रसंग्रहः ( प्रथमो भागः ) | म० म० श्रीगोपीनाथकविराजसम्पादितम् । |
| ७. | नित्याषोडशिकार्णवः, | ऋजुविमर्शिनीसहितः ( तन्त्रम् ) श्रीव्रजवल्लभद्विवेदिसम्पादितः । |

प्रकाशक—संचालक अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।
मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी ।